THE

# ÁNANDÁŚRAM SANSKRIT SERIES.

NO. 2.

# ŚRÍ RUDRÁDHYÁYÁH

WITH THE BHÁSHYÁS

BY

**SÁYAṆA MÁDHAVÁCHÁRYA**

AND

**BHATTA BHÁSKARA.**

EDITED, WITH

THE ASSISTANCE OF SEVERAL PANDITS AND PUBLISHED

BY

MÁHÁDEV CHIMNÁJÍ ÁPTE, B.A., LL.B.,

PLEADER HIGH COURT, AND FELLOW OF THE UNIVERSITY OF BOMBAY.

PRINTED AT THE ÁNANDÁŚRAM PRESS,

POONA.

1888.



*Price Rs. 1-6.*

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २

# श्रीरुद्राध्यायः

सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः ।

महादेव चिमणाजी आपटे

इत्यनेन

विद्वद्भिः शोधयित्वा

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितः ।

शालिवाहनशकाब्दाः १८१०

सन १८८८



मूल्यं १८६ आणकषट्कसहितो रूप्यकः ।

# ॐ नमः परमात्मने ।

ऋग्भिः 'स्तुवन्ति यजुर्भिर्यजन्ति सामभिर्गायन्ति' इत्युक्तेर्यजनार्थकस्य यजुर्वेदस्य पञ्चमोऽयमध्यायः 'रुद्राध्याय' इत्युच्यते । चतुर्थेऽध्याये सर्वा इष्टकाचितय उक्ताः । रुद्राध्यायसंज्ञकेऽस्मिन्पञ्चमेऽध्याये चित्यग्नौ होम उच्यते । अस्य च कर्मकाण्डे पाठात् कर्माङ्गत्वम् । तथा च श्रुतिः—

'रुद्रो वा एष यदग्निः । स एतर्हि जातो यर्हि सर्वश्चितः' स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति । तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैन ँ शमयति । नार्तिमार्च्छत्यध्वर्युर्न यजमानः'

इति । स्मृतिरपि—

'चमकं नमकं चैव पौरुषं सूक्तमेव च ।
नित्यं त्रयं प्रयुञ्जानो ब्रह्मलोके महीयते' ॥

इति । याज्ञवल्क्योऽपि—

'सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः ।
सहस्रशीर्षाजापी च मुच्यते सर्वकिल्बिषैः' ॥

इत्यादिभिरस्य कर्माङ्गत्वं प्रसिद्धमेव भवति । जाबालोपनिषदि ज्ञानहेतुत्वमप्यस्य श्रूयते । तथा च ब्रह्मचारिभिः 'किं जप्येनामृतत्वमश्नुते?' इति पृष्टो याज्ञवल्क्य आह 'शतरुद्रीयेण' इति । 'एतानि ह वा अमृतस्य नामधेयानि भवन्ति एतैर्ह वा अमृतो भवति' इति । कैवल्योपनिषदि—'यः शतरुद्रीयमधीते सोऽग्निपूतो भवति' इत्यादिभिः । स्मृतयोऽपि ।

'सततं रुद्रजाप्योऽसौ परां मुक्तिमवाप्स्यति' ॥

इत्यादयो बह्व्यः । एवं कर्माङ्गत्वज्ञानहेतुत्वाभ्यां विषयिभिर्मुमुक्षुभिश्चावश्यमादरणीयोऽयं रुद्राध्यायः । वर्तते चास्य सर्वत्र पठन-पाठनप्रचारो विशेषतया दाक्षिणात्येषु । यद्यपि केवलं पाठमात्रेणाप्ययमिष्टफलदो भवत्येव तथापि—

'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः' ॥

इत्यादिषु वेदार्थाभिज्ञस्य प्रशंसोक्तेः—

'यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' ॥

इत्यादिभिरनर्थज्ञस्य निन्दाश्रवणात्—

**‘ स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ’ ॥**

इत्यादिभिरर्थानभिज्ञस्य स्थाणुत्वोक्त्या निन्दाया अर्थज्ञस्य च सकलकल्याणप्राप्तेरभिधानादर्थज्ञानमत्यावश्यकमेव । स्थाणुरिति दृष्टान्तः । छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते । केचित्तु अर्थमजानतोऽपि यथावत्पाठमात्रेणैव कर्माङ्गत्वं सिद्ध्यतीति मन्यन्ते । **‘ स्वाध्यायोऽध्येतव्यः ’** इत्यस्य अध्ययनविधेर्वेदाक्षरग्रहणेनैव चरितार्थत्वम् । पूर्वकाण्डार्थज्ञानं कर्मानुष्ठानाक्षिप्तम् । कर्मानुष्ठानं पाठमात्रेणैव भवतीति तन्न सर्वसम्मतम् । **‘ अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ’** इत्यादिष्वनर्थज्ञस्य पाठकाधमत्वोक्तेरर्थज्ञानं विना पाठमात्रमपि न सम्यक्तया भवितुमर्हति । यद्यपि कर्मानुष्ठानं केवलेन मन्त्रपाठेनैव सिद्ध्यति तथापि केवलादनुष्ठानाद्विद्यासहितेऽनुष्ठाने फलातिशयमामनन्ति छन्दोगाः । **‘ तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ’** । अध्ययनं नामार्थज्ञानपूर्वकमक्षरग्रहणम् । तथा सत्यध्ययनविधेरर्थज्ञानपूर्वकमक्षरग्रहणेनैव चारितार्थ्यं भवेत् न केवलमक्षरग्रहणेनैव । ज्ञानहेतुत्वं त्वर्थज्ञानं विना न भवेदेव । आधुनिकानां तु सर्वेषामर्थज्ञानस्यावश्यकत्वे न कापि विप्रतिपत्तिः । तत्सिद्धं कर्माङ्गत्वेऽप्यस्य रुद्राध्यायस्यार्थग्रहणस्यावश्यकत्वम् ।

अर्थज्ञानसाधनानि तु निगमनिरुक्तव्याकरणादीनि सन्त्येव । परं तेष्वकृतबहुलपरिश्रमाणां भाष्यं विनार्थज्ञानं न सुलभमिति मत्वा वैदिकमार्गप्रवर्तकस्य **वीरबुक्कभूपतेर्मन्त्रिणा माधवाचार्येण** चत्वारोऽपि वेदा व्याख्याताः । तत्र यजुर्वेदव्याख्याने तस्य पञ्चमोऽध्यायोऽयं रुद्राध्यायोऽपि व्याख्यातः । तत्र च केवलं रुद्राध्यायार्थं विवित्सूनां समग्रस्य तस्य ग्रन्थस्य सम्पादनं बहुवित्तव्ययायाससाध्यमिति मत्वा सुलभत्वेनास्य प्रचारो भूयादिति विचार्यानन्दाश्रमाधिपतिना प्रथमं सायणभाष्यसहित एवायं रुद्राध्यायो मुद्रितुमारब्धः । एतस्मिन्नेव समये वाईक्षेत्रनिवासिभिः **गङ्गाधर अनन्त नित्सुरे** इत्यभिधैर्मन्मित्रैर्भट्टभास्करकृतभाष्यसहितमेकं पुस्तकं मत्सविधे प्रेषितम् । एतददृष्टपूर्वमतीव समीचीनं भट्टभास्करकृतं भाष्यं विदुषां सुलभं भवत्विति विचार्य तदप्यत्र सङ्गृहीतम् । तदेवं भाष्यद्वयसंवलितोऽयं रुद्राध्यायः सर्वेषां पठन-पाठनार्थज्ञानादिभिः कर्माङ्गत्वं ज्ञानहेतुत्वं च साधयत्विति ।

अत्र प्रसङ्गतो माधवाचार्यस्य किंचिद्वृत्तं वर्ण्यते । तत्र दक्षिणस्यां दिशि कर्णा-

टकदेशे तुङ्गभद्रानदीतीरे पम्पानामकं सरः क्षेत्रं च वर्तते। अस्यैव विजयानगरमिति प्रथा पूर्वस्मिन्काले आसीत्। इयमेव कैश्चित् किष्किन्धानगरीत्यप्यभिधीयते सम्प्रति तु गोवलकोण्डा इति प्रसिद्धमेतन्नगरं यत्र च विरूपाक्षाख्यया स्वदर्शनेन तत्रत्याञ्जनान् पावयति स्म भगवान् शङ्करः। तत्र वैदिकमार्गप्रवर्तकः स्वप्रतापपरिशोषितपरिपन्थिसराः वीरबुक्कभूपालो नाम सार्वभौम आसीत्। तस्येन्द्रस्य बृहस्पतिरिव नलस्य सुमतिरिव रामस्य वसिष्ठ इव धर्मसुतस्य धौम्य इव पृथोः सौजामिनिरिव कुलगुरुर्मन्त्री राजकार्यधुरन्धरोऽयं माधवाचार्य आसीत्। यस्य च विहसितबृहस्पतिशुक्रचाणक्यादिनीतिविभवस्य शास्त्रे लौकिके व्यवहारे च महती प्रतिष्ठा आसीदत एव माधवार्यमाधवाचार्यमाधवामात्यइत्यादीन्यन्वर्थकानि नामान्युपलभ्यन्ते तेषु तेषु ग्रन्थेषु*। अस्य च—

---

* अत्र ताम्रपत्रस्थितमिदमनुसन्धेयम्—

तस्मिन्भारतवर्षदक्षिणदले देशोऽस्ति कर्णाटकः
तन्मध्ये सरिदुत्तमा विजयते सा तुङ्गभद्राभिधा।
यत्तीरे दुरिताटवीहुतवहे देवो विरूपाक्ष इ-
त्यास्ते सन्ततमन्तरेण सुमनःस्रोतस्विनीचिन्तनम्॥ १॥
यस्योपकण्ठे विजयाभिधाना सा दुर्जया राजति राजधानी
यस्यां विरूपाक्षकटाक्षदग्धमुज्जीवयन्ति स्मरमुत्पलाक्ष्यः॥ २॥
वंशे यदोरभिनवांश इवाच्युतस्य श्रीसङ्गमादजनि सङ्गररङ्गभीमः।
श्रीबुक्कराज इति धिक्कृतशत्रुरेष तामध्यतिष्ठदथ मध्यमलोकपालः॥ ३॥
तस्याज्ञया माधवमन्त्रिवर्यः प्राशाज्जयन्तीपुरराज्यमृद्धम्।
यन्मन्त्रशक्त्या वपुरुत्सृजन्तोऽप्यरातयः स्वास्थ्यमहो भजन्ते॥४॥
आशान्तविश्रान्तयशाः स मन्त्री दिशो जिगीषुर्महता बलेन।
गोवाभिधां कौङ्कणराजधानीमन्येन मन्येऽरुणदर्णवेन॥
प्रतिष्ठितांस्तत्र तुरुष्कसङ्घानुत्साद्य दोष्णा भुवनैकवीरः।
उन्मूलितानामकरोत्प्रतिष्ठां श्रीसप्तनाथादिसुधाभुजां यः॥ ५॥ इत्यादि।

स्वस्तिश्रीशके त्रयोदशाधिकत्रिशतोत्तरसहस्र (१३१३) गते वर्तमानप्रजापतिसंवत्सरे वैशाखमासे कृष्णपक्षे अमावास्यायां सौम्यदिने सूर्योपरागपुण्यकाले स्वस्तिश्रीमन्महामन्त्रीश्वर उपनिषन्मार्गप्रवर्तकाचार्यः श्रीमन्माधवराजः कुञ्जरविषयवर्तिनं कुञ्जरनामानं ग्रामं माधवपुरमिति प्रथितनामानमग्रहारं कृत्वा, इत्यादिविस्तरभयादलं पल्लवितेन।

'श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता।
सायणः सोमनाथश्च मनोबुद्धी सहोदरौ ॥ १ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं यस्य गोत्रं सर्वज्ञः स हि माधवः' ॥ २ ॥

इति पराशरस्मृतिव्याख्याप्रक्रमे स्वयमेव तेनैवोक्तत्वात् श्रीमती जननी मायणः पिता सायणः सोमनाथश्चेमौ द्वौ भ्रातरौ बौधायनं सूत्रं याजुषी शाखा भारद्वाजं गोत्रं चासीदिति ज्ञायते। कुत्रचित् 'सायणो भोगनाथश्च' इत्यपि पाठान्तरं दृश्यते तस्मात् सायणसोमनाथसंज्ञकौ वा सायणभोगनाथसंज्ञकौ भ्रातरावेति निश्चेतुं न शक्यते। तथा च वेदार्थप्रकाशः माधवाचार्यकृतः सायणाचार्यकृतो वेत्यपि न ज्ञायते। केचिदाधुनिकाः पण्डिताः—माधवाचार्यस्तावद्राजकार्यनिमग्न एव आसीत्। तस्य च भ्राता सायणाचार्यस्तेनैव वेदार्थप्रकाशादीन् महतोऽनेकान् ग्रन्थान् निर्माय माधवाचार्यनाम्ना प्रसिद्धिं प्रापिताः यथा राज्ञो देवगिरीश्वरस्यामात्यो हेमाद्रिः स्वाश्रितपण्डितवरबोपदेवकृतैर्बहुभिर्ग्रन्थैः स्वनाम्ना प्रख्यापितैः ग्रन्थकृदिति प्रसिद्धिं गतस्तथैवायं माधवाचार्यः सायणकृतग्रन्थैः प्रसिद्धिं गत इति वदन्ति। वस्तुतस्तु नात्र किमपि प्रमाणमुपलभामहे, यदाश्रित्यास्यानुमानस्य प्रमाणकोटौ प्रवेशः स्यात्। माधवाचार्यकृतत्वेन प्रसिद्धेषु विभिन्नेषु ग्रन्थेषु कुत्रचित् 'सायणमाधवीये' 'कुत्रचित् माधवामात्यविरचिते' कुत्रचित् 'सायणाचार्यविरचिते माधवीये' इत्यादि उपलभ्यते। अतो वेदार्थप्रकाशादिग्रन्थकर्ता सायणो वा माधवो वेति महान् संशयः। सोमनाथकृता ग्रन्था न कुत्राप्युपलभ्यन्ते। भट्टसोमेश्वर इत्येको महान् पण्डित आसीत्। तत्कृता बहवो मीमांसाग्रन्था उपलभ्यन्ते। स एव सोमनाथो वान्यो वा कश्चन इत्यपि न निश्चेतुं शक्यमत आस्तां गहनावगाहेन।

माधवाचार्यजन्मसमयः शके १३०० तमे वर्षे आसीदिति केचन वदन्ति। उपलब्धताम्रपत्रलेखे १३१३ प्रजापतिनाम्नि संवत्सरे वैशाखकृष्णपक्षे अमायां सूर्यग्रहणे वैदिकमार्गप्रवर्तकश्रीमन्माधवाचार्येण कुचरसंज्ञकस्य ग्रामस्य स्वनाम्ना माधवपुरमिति नाम निधाय चतुर्विंशतिसङ्ख्येभ्यो विद्वद्भ्यो ब्राह्मणेभ्य उदकपूर्वकं तद्दत्तमिति ज्ञायते। तस्माच्च १३१३ तमे वर्षे एतद्दानं दत्तमिति गृहीतं चेत् त्रयोदशशतकस्य चतुर्थे चरणे तस्य जन्म आसीदित्यनुमितं भवति।

माधवाचार्येण पूर्वस्मिन्वयसि प्रथमं वीरबुक्कभूपालस्य अनन्तरं किञ्चित्कालपर्यन्तं तत्सूनोश्च सुगृहीतनामधेयस्य हरिहराख्यस्य मन्त्रित्वं कृतमिति ज्ञायते।

यतोऽथर्वणवेदार्थप्रकाशसमाप्तौ हरिहरनामोल्लेखस्तेनैव कृतः। अनन्तरमैहिकसुखनिरपेक्षेण माधवार्येणोत्तरस्मिन्वयस्यैहिकसाम्राज्यधुरं त्यक्त्वा आमुष्मिकसाम्राज्यधूर्ग्रहणायेव चतुर्थाश्रमः स्वीकृतः। तत्र विद्यारण्यतीर्थ इति प्रथितास्याभिधा। चतुर्थाश्रमेऽपि अनेन श्रीमद्भगवतः शङ्कराचार्यस्य शारदापीठे शृङ्गेरपुरे तत्पट्टाधिकारः स्वीकृत इति ज्ञायते। तस्मिंश्च पट्टे शङ्कराचार्यात् षड्विंशतितमोऽयं विद्यारण्यभारती आसीदिति ज्ञायते। चतुर्थाश्रमेऽस्य गुरवः शङ्करानन्दस्वामिन आसन्। यतस्तत्कृतपञ्चदश्यां "नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने" इति शङ्करानन्दस्य गुरुत्वेनाभिधानं स्पष्टम्। चतुर्थाश्रमग्रहणानन्तरं द्वैताद्वैतविषये बहुभिर्मतान्तरास्थितैः पण्डितैरस्य विवादोऽभूदिति। विशिष्टाद्वैतमतवादिना अक्षोभ्यमुनिसंज्ञकेन केनचिन्महापण्डितेन काञ्चीनगरे बहुदिनपर्यन्तं विवाद आसीदिति श्रूयते। तत्र च जयापजयविषये उभयमतास्थायिनां महान्कलहः। केचन विशिष्टाद्वैतवादिन एवं वदन्ति—

'विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत्' ॥

इति। अन्ये अद्वैतवादिनः—

'अक्षोभ्यं क्षोभयामास विद्यारण्यो महामतिः'

इत्यादि यथाभिलषितं जल्पन्ति। तदास्तां स्वमताग्रहगृहीतानां जल्पनाविवेचनेन। श्रीमन्माधवाचार्यकृता ग्रन्थास्त्वेते—

१ ऋग्वेदभाष्यम् २ यजुर्वेदभाष्यम् ३ सामवेदभाष्यम् ४ अथर्वणवेदभाष्यम् ५ चतुर्णां वेदानामैतरेयताण्ड्यादिब्राह्मणभाष्याणि ६ पराशरस्मृतिभाष्यम् ७ जैमिनीयन्यायमालाविस्तरः ८ सर्वदर्शनसङ्ग्रहः ९ अनुभूतिप्रकाशः १० दशोपनिषद्दीपिका ११ ब्रह्मगीता १२ पञ्चदशी १३ जीवन्मुक्तिविवेकः १४ अपरोक्षानुभूतिटीका १५ माधववृत्तिः।

इत्यादयोऽन्ये च बहवस्तत्कृता ग्रन्था उपलभ्यन्ते। स्कन्दपुराणान्तर्गतसूतसंहिताव्याख्याकर्तापि माधव इति प्रसिद्धः। केचन सायणमाधव एव स इति वदन्ति। अस्मत्संगृहीतसूतसंहिताटीकापुस्तके—

प्रणमामि परं ब्रह्म यतो व्यावृत्तवृत्तयः।
अविचारासहं वस्तु विषयीकुर्वते धियः ॥ १ ॥
श्रीमत्काशीविलासाख्यक्रियाशक्तीशसेविना।
श्रीमत्त्र्यम्बकपादाब्जसेवानिष्णातचेतसा ॥ २ ॥
वेदशास्त्रप्रतिष्ठात्रा श्रीमन्माधवमन्त्रिणा।
तात्पर्यदीपिका सूतसंहिताया विधीयते ॥ ३ ॥

क्रियते तत्प्रकरणतात्पर्यप्रथनपूर्वकं विशदम् ।
विषमपदवाक्यविवरणं मन्दधियामनुग्रहाय भक्त्या च ॥ ४ ॥

इति वर्तते । तस्मात् काशीनिवासिना त्र्यम्बकपादाब्जसेविना केनचिन्माधवसंज्ञकेन विदुषा इयं सूतसंहिताटीका निर्मितेत्यनुमीयते । किञ्च माधवाचार्यकृतग्रन्थस्य—

' वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम् ' ॥ १ ॥

इत्ययं श्लोकः राजशासनमुद्रिकेव प्रायस्तत्कृतेषु ग्रन्थेषु सर्वत्रोपलभ्यते । सूतसंहिताटीकायां स न कुत्रापि दृश्यते । तथैव माधवनिदानकर्ताप्यन्य एव । शतप्रश्नकल्पलतिकाकृद् माधवः कश्चनातीवार्वाचीन इति प्रतिभाति ।

अथ द्वितीयं भाष्यं भट्टभास्करकृतम् । अथ कोऽयं भट्टभास्करः कुत्रत्यश्चेत्यादिविवक्षायामस्य इतिवृत्तं किमपि न ज्ञायते । अनेन सर्वस्यापि यजुर्वेदस्य भाष्यं कृतम् । श्रीमच्छङ्करभगवत्पादपूज्यस्थितिसमये भट्टभास्करसंज्ञकः कश्चन शाक्तः आसीदिति माधवाचार्यकृतशङ्करविजयसंज्ञकाद्ग्रन्थाज्ज्ञायते । तस्मिन्नेव समये अन्योऽपि भट्टभास्करो ज्योतिःशास्त्रप्रवर्तक आसीदिति श्रीमदानन्दगिरिकृतशङ्करविजयादवगम्यते । एतयोरन्यतम एवायमितिस्वीकारे न किंचित्प्रमाणमुपलभामहे । किंच शङ्कराचार्यसमकालीनस्यास्यातिप्राचीनत्वे एतत्कृतयजुर्वेदभाष्यादीनां श्रीमन्माधवाचार्यकृतवेदार्थप्रकाशादिग्रन्थेषु न कुत्राप्युल्लेखः । भट्टगुरुसंज्ञकः मीमांसकधुरीणो महान् पण्डित आसीदिति वेदार्थप्रकाशे उक्तम् । स च भट्टकुमारिल एवेति विदुषां मतम् । तथापि यजुर्वेदभाष्यकृद् भट्टभास्करस्तु कुत्र कदा वा जात इति निर्णेतुमशक्ता वयम् । तत्कृतं यजुर्वेदभाष्यमपि अस्माभिर्न दृष्टम् । केवलमस्य रुद्राध्यायस्य भाष्यमस्मद्धस्तगतम् । तथापि भट्टभास्करोऽयं माधवाचार्यान्न प्राचीन इति तु निश्चितमेवेति विदो विदांकुर्वन्तु । तदेवं सायणाचार्यभट्टभास्करकृतभाष्यद्वयसंवलितोऽयं रुद्राध्यायो विदुषां मोदमावहन् सर्वतो विजयतामित्यभ्यर्थयते—

तत्रभवतां सेवाभिलाषी
वामनशास्त्रिशर्मा ।

रुद्राध्यायपदानामादर्शपुस्तकं 'क' इतिसंज्ञितं पुण्यपत्तननिवासिभिः 'केशव मल्हार गुरुजी' इत्येतैर्दत्तम् ।

सायणाचार्यकृतरुद्राध्यायभाष्यस्यादर्शपुस्तकानि पञ्चैवोपलब्धानि । तानि यथा—

क० ख० संज्ञिते—वे० शा० सम्पन्नगङ्गाधरशास्त्रिदातारामिधैर्दत्ते ।

ग० संज्ञितं—वे० शा० सम्पन्नवासुदेवशास्त्रिभिर्दत्तम् ।

घ० संज्ञितं—पुण्यपत्तननिवासिभिः आपटे इत्युपनामधारिमहादेवचिमणाजी इत्येतैर्दत्तम् । तच्च शालिवाहनशके १७३९ ईश्वरनामसंवत्सरे आषाढशुद्धनवम्यां लिखितम् ।

ङ० संज्ञितं—जयपूरनिवासिभिर्नारायणभट्टपर्वणीकर इत्येतैः प्रेषितम् ।

भट्टभास्करकृतरुद्राध्यायभाष्यस्यादर्शपुस्तकद्वयमेवोपलब्धम् । तद्यथा—

क० संज्ञितं—वटोदरनिवासिभिः श्रीमद्बाप्पासाहेब मैराळ इत्येतैः प्रेषितम् ।

ख० संज्ञितं—वाईक्षेत्रनिवासिभिः नित्सुरे इत्येतैः प्रेषितम् ।

आपटे इत्येषां पुस्तकं मुक्त्वा अन्येषां पुस्तकानां लेखनसङ्ग्रहादिकालो नैव दृष्टः ।

वामनशास्त्रिशर्मा ।

॥ श्रीः ॥

# ॥ अथ रुद्राध्यायः ॥

## सायणाचार्य-भट्टभास्कर-भाष्यसहितः ।

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीमातापितृभ्यां नमः ॥ श्रीमद्भ्य एकादशरुद्रेभ्यो नमः ॥

हरिः ॐ

सायणाचार्यकृत उपोद्घातः

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
इष्टकाचितयः सर्वाश्चतुर्थे हि समापिताः ।
रुद्राध्याये पञ्चमे तु चित्यग्नौ होम उच्यते ॥ २ ॥
कर्मप्रकरणे पाठात्कर्माङ्गत्वमपीष्यते ।
ज्ञानहेतुत्वमप्यस्य तथोपनिषदीरितम् ॥ ३ ॥
किं जप्येनाऽमृतत्वं नो ब्रूहीत्युक्तो मुनिर्जगौ ।
शतरुद्रीयकेणेति जाबाला आमनन्ति हि ॥ ४ ॥
स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् ।
बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ॥ ५ ॥
इह कर्माङ्गता यादृग्वर्णिता ब्राह्मणेन ताम् ।
बोद्धुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥ ६ ॥

कल्पः । शतरुद्रीयं जुहोति जर्तिलयवाग्वा वा गवीधुकयवाग्वा वा जर्तिलैर्गवीधुकसक्तुभिः कुशयवसर्पिषाऽजाक्षीरेण मृगीक्षीरेण वाऽर्कपर्णेनोदङ् तिष्ठन्नुत्तरस्य पक्षस उत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृण्णायामनुपरिचारं वा । नमस्ते रुद्र मन्यव इत्येताननुवाकांस्त्रेधं विभज्यापि वा प्रथमादुप-

---

१ क० घ० संज्ञकपुस्तकयोः सर्वोपनिष
२ ख० ङ० संज्ञकपुस्तके तत्
३ ङ० सं० पुस्तके भिर्वा कुश
४ ख० सं० पुस्तके कारं वा

क्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्यश्च व इत्युपक्रम्य नमः स्वायुधायेति नाभिदघ्ने शेषेण प्रागवत्तानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशाऽवैतानान् हुत्वाऽन्वारोहान् जुहोति नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येऽन्तरिक्षइति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वैतानेव यजमानं वाचयित्वा एतानेव विपरीतान् प्रत्यवरोहान् हुत्वा सञ्चरे पशूनामर्कपर्णमुदस्यति यं द्विष्यात्तस्य सञ्चरे इति ॥

## भट्टभास्करकृत उपोद्घातः

श्रीगणेशाय नमः ॥ ॐ अतःपरमग्निकाण्डमेवाग्न्यार्षेयं तत्र चरमायामिष्टकायां शतरुद्रीयं जुहोति नमस्ते रुद्र मन्यवइति। "रुद्रो वा एष यदग्निः स एतर्हि जात" इत्यादि ब्राह्मणम्। "रुद्रो वा एष यदग्निस्तस्यैते तनुवा" इत्यादि च "अजाक्षीरेण जुहोति ग्राम्याणां पशूनां पयसा जुहुया" दित्यादिब्राह्मणम्। "अर्कपर्णेन जुहोतीति"। "अङ्गिरसः सुवर्गं लोकं यन्तः"। इत्यादि ब्राह्मणम्। तत्रायं प्रयोगक्रमः। उदङ्मुखस्तिष्ठन् मुखदघ्ने धारयन् नमस्ते रुद्र मन्यव इति प्रतिपद्यान्तमेतमनुवाकं तन्निगद्य द्वितीयतृतीयौ चतुर्थस्य यत्राभिजानाति नमः क्षत्तृभ्यः इति ततः स्वाहा करोति ततः प्रागावृत्य नाभिदघ्ने धारयन् संग्रहीतृभ्यश्च व इति प्रतिपद्यावशिष्टमनुवाकस्य निगद्य पञ्चमं षष्ठं सप्तमस्य च यत्राभिजानाति नमो वर्ष्याय चेति ततः स्वाहा करोति। ततो दक्षिणावृत्य जानुदघ्ने धारयन् नमो वर्ष्याय चेति प्रतिपद्यावशिष्टमनुवाकस्य निगद्याऽष्टमं नवमं दशमं चैकादशस्य च यत्राभिजानाति। "य एतावन्तश्चे"ति ततः स्वाहा करोति। "त्रेधा विभक्तं जुहोती"त्यादि ब्राह्मणम्। "इयत्यग्ने जुहोती"त्यादि च तत्रैकत्रिभागः षण्णवतिमन्त्राः। ततःप्रत्यङ्ङावृत्य गुल्फदघ्ने धारयन् नमो रुद्रेभ्यो ये पृथिव्यामिति हुत्वैतद्यजमानं वाचयति "तिस्र उत्तरा आहुतीर्जुहोति"इत्यादिब्राह्मणम् "एता वै देवताः सुवर्ग्या या उत्तमा" इत्यादि च नाभिदघ्ने धारयन् नमो रुद्रेभ्यो ये दिवीति हुत्वा यजमानं वाचयति ॥ अस्य रुद्राध्यायस्य ऋषिर्भगवानेव अग्निःकाण्डऋषिः छन्दो महाविराट् देवताऽपि च शम्भुः प्रतिमन्त्रमृष्यादयो व्याख्यावसरे वक्ष्यन्ते। एष यज्ञसंयुक्तः कल्पः अथवा यज्ञसंयुक्ताः प्रयोगाः श्रुतिस्मृतिपुराणादिषु प्रसिद्धाः मोक्षधर्मपापक्षयवित्तारोग्यायुष्यादिफलाः बहवो विद्यन्ते तेषु च कांश्चिद्ब्रूमः प्रतिमन्त्रं च प्रयोगविशे-

१ घ० सानेभ्य
२ ख० नुवाकान् हुत्वा
३ ख० ग० त्वा तानेव
४ ख० ग० त्वा तानेव

षाः पुरस्ताद्वक्ष्यन्ते । तत्र जाबालोपनिषदि । "अथ हैनं ब्रह्मचारिण ऊचुः । किं जप्येनैवामृतत्वमश्नुत" इति "ब्रूही"ति "स होवाच याज्ञवल्क्यः शतरुद्रियेणे" ति "एतानि ह वा अमृतस्य नामधेयानि भवन्ति एतैर्ह वा अमृतो भवतीति" कैवल्योपनिषदि "यः शतरुद्रियमधीते सोऽग्निपूतो भवति स्वर्णस्तेयात्पूतो भवति सुरापानात्पूतो भवति ब्रह्महत्यात्पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवति अत्याश्रमी सर्वदा सकृद्वा जपेदनेन ज्ञानमाप्नोति संसारार्णवनाशनम् तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते इति कैवल्यं फल मश्नुते" इति । आह शातातपः "स्तेयं कृत्वा गुरुदारांश्च गत्वा मद्यं पीत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापै"रिति । आह याज्ञवल्क्यः "सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः । सहस्रशीर्षाजापी च मुच्यते सर्वकिल्बिषैः ॥ शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः । सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥ वेदमेकगुणं जप्त्वा तदन्हैव विशुध्यति । रुद्रैकादशिनीं जप्त्वा तदन्हैव विशुध्यती" ति ॥ आह शङ्खः "सुवर्णस्तेनो रुद्राध्यायी मुच्यते" इति । आहतुरत्र्यङ्गिरसौ "एकादश गुणान् वाऽपि रुद्रानावृत्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशय" इति । वायुप्रोक्तपुराणे "यश्च रुद्रान् जपेन्नित्यं ध्यायमानो महेश्वरम् । यश्च सागरपर्यन्तां सशैलवनकाननाम् । सर्वान्नात्मगुणोपेतां सुवृक्षजलशोभिताम् । दद्यात्काञ्चनसंयुक्तां भूमिं चौषधिसंयुताम् । तस्मादप्यधिकं तस्य सकृद्रुद्रजपाद्भवेत् । ममभावं समुत्सृज्य यस्तु रुद्रान् जपेत्सदा । स तेनैव च देहेन रुद्रः संजायते ध्रुवम् ॥ जपेनानेन विप्रेन्द्रा नृपाश्चान्ये द्विजातयः । हित्वैवं सकलं पापं गताः शिवपुरं पुरा । अहं च परमेशस्य सामीप्यं लब्धवां"स्तथेति ॥ तथा "चमकं नमकं चैव पौरुषसूक्तं तथैव च । नित्यं त्रयं प्रयुञ्जानो ब्रह्मलोके महीयते" ॥ तथा "चमकं नमकं होतॄन्पुरुषसूक्तं जपेत्सदा । प्रविशेत्स महादेवं गृहं गृहपतिर्यथा" ॥ तथा "भस्मदिग्धशरीरस्तु भस्मशायी जितेन्द्रियः । सततं रुद्रजाप्योऽसौ परां मुक्तिमवाप्स्यति ॥ रोगवान् पापवांश्चैव रुद्रं जप्त्वा जितेन्द्रियः । रोगात्पापाद्विनिर्मुक्तो ह्यतुलं सुखमश्नुते" ॥ आह शङ्खः "रहसि कृतानां महापातकानामपि शतरुद्रीयं प्रायश्चित्तमिति" । आहापस्तम्बः "यस्य रुद्रः प्रजां पशून् वाऽभिमन्येतोदङ् परेत्य रुद्रान् जपंश्चरेदित्यपयज्ञसंयुक्तः कल्प" इति । ईशानयज्ञे च । "अत्र रुद्रान्जपेत्प्रथमोत्तमौ वेति" । अयं च ब्रह्मविद्यारूपत्वादुपनिषन्मन्त्रराशिः प्रश्नः । अतएव रहस्यप्रकरणे आम्नायते । ब्राह्मणविनियोगानुरोधेन त्वत्र व्याचक्ष्महे । एक-

शतमध्वर्युशाखास्तासु सर्वासु चेयं रुद्रोपनिषदाम्नायते शतं रुद्रा देवता अस्येति शतरुद्रीयमुच्यते शतरुद्राद्धश्चेति छप्रत्ययः । अनया च रुद्रोपनिषदा ब्रह्मविद्या प्रतिपाद्यते । ब्रह्मणश्च त्रीणि रूपाणि सन्ति । एकं कार्यरूपं सर्वोपादानतया सर्वात्मकम् । इतरत्पुरुषाख्यं सृष्टिस्थितिसंहारनिमित्तं । द्वयमप्याविद्यकमन्यत्परं रूपं निर्गुणं निरञ्जनं सत्यज्ञानानन्दलक्षणम् । तदेतदृषिणाप्युक्तम् । " विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्र " इति । " यो देवानां प्रथमं पुरस्ताद्विश्वा धियो रुद्रो महर्षि-" रिति । उक्तं च । " संसारी चिदचिभ्द्योऽन्यः क्वचित्क्वचिदनाविलम् । जयत्यनादिनिधनो महादेवो महार्णव " इति ॥ किंच " मूर्त्यष्टकमधिष्ठाय बिभर्तीदं चराचरम् । आत्मत्रयमधिष्ठाय सृष्ट्यादि प्रकरोति सः" ॥ तत्र योऽसौ संहारकर्ता तं सर्वदा देवोऽधितिष्ठति । कार्यकाले त्वन्या सा च देवस्य घोरा तनूः । अन्या शिवा । यथोक्तम् । "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्याशिवान्येति" । "यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयती"त्यादि च । शक्तिश्च सर्वदा विचित्रा संहारकारिणी तस्य । संहारकर्तृप्रभृतयो देवस्य घोरास्तनवः तासु भयशङ्का । तस्मात्प्रथमेनानुवाकेन तादृशं देवं क्रुद्धं प्रसाद्य तस्योपसंहारकरणानि च नम इत्यादिभिर्नमस्कृत्य प्रसादयति । यथोक्तं । यैवास्य घोरा तनूस्तां तेन शमयति ॥ यद्वसोर्द्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणातीति ततस्तामुपसंहार्य द्वितीयप्रभृतिभिरष्टाभिरनुवाकैर्देवस्य वैश्वरूप्येण स्तुतिं नमस्कारं च करोति । एवं च देवः सुतरां प्रसीदति ततो दशमैकादशाभ्यामभयं याचते ॥ अयं महावाक्यार्थः ॥ केचिदाहुः । प्रथमेनानुवाकेन क्रुद्धं देवं प्रसाद्य ततोऽष्टाभिरनुवाकैः किमधिष्ठानमधिष्ठाय देवस्तिष्ठतीत्यजानन् सर्वं चराचरं तदधिष्ठानशङ्कया नमस्कृत्यान्त्याभ्यामभयं प्रार्थयते । देवो हि परमस्वातन्त्र्यभूमिः । किञ्चित्किञ्चिदधिष्ठाय जगतः निग्रहानुग्रहौ करोति । तथाहि । यक्षरूपेणाविर्भूय देवान् व्यामोहयामास । विटवेषधारी सपत्नीकानृषीन्व्रताद्भ्रंषयामास । किरातवेषालङ्कृतः पाण्डुसुतेन च सह चिक्रीड । भैरवबीजवपुषा कथञ्चिद्वेषधारिण्या देव्या सह गजाननं जनयामास । ऐन्द्ररूपेण कञ्चिद्भृत्यं तपसश्च्यावयितुमियेष । अर्भकरूपेण देव्या उत्सङ्गमधिशिश्ये । औलूकेन वपुषा कस्मैचिद्द्विषये ज्ञानमुपदिदेश । उन्मत्तवेषभूषितो देवोत्तमायात्मप्रजननमलङ्कृतं जगत्कारणत्वेन दर्शयामास । सापराधमात्मानं मारयितुकामं कञ्चिद्भृत्यं निवारयितुं वस्त्रनिर्णेजनाश्मनः प्रादुर्बभूव । भूविवराद्भ्रष्टं हविः कस्यचित्तत्रैव कृतस-

भिधानो बुभुजे। एवं स्वाभिमतविविधवेषविग्रहपरिग्रहेण क्रीडतो देवदेवस्य लीलायितमिदं विश्वं वर्तते। अतो वैश्वरूप्येण स्तुत्वा नमस्करोति। यथोक्तम्। "चरितानि विचित्राणि गुह्यानि गहनानि च। ब्रह्मादीनां च सर्वेषां दुर्विज्ञेयोऽसि शङ्कर" इति॥

॥ तत्र प्रथमानुवाके प्रथमामृचमाह ॥

नमस्ते रुद्र मन्यवं उतो त इषवे नमः।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः इति ॥१॥

नमः ते रुद्र मन्यवे उतोइति ते इषवे नमः। नमः ते अस्तु धन्वने बाहुभ्यामिति बाहुऽभ्याम् उत ते नमः ॥ १ ॥

सा० भा० हे रुद्र ते त्वदीयो यो मन्युः कोपः तस्मै नमोऽस्तु। स मन्युरस्मद्वैरिष्वेव प्रसरतु नत्वस्मासु। उतो अपि च ते तव इषवे नमः त्वदीयाय बाणाय नमोऽस्तु। तथा ते धन्वने त्वदीयाय धनुषे नमोऽस्तु। उत अपि च ते बाहुभ्यां त्वदीयाभ्यां धनुर्बाणोपेताभ्यां हस्ताभ्यां नमोऽस्तु। एतत् सर्वं वैरिष्वेव प्रवर्तताम् न तु मयीत्यभिप्रायः॥ १॥

म० भा० भा० ॐ नमस्ते रुद्र मन्यव इत्यस्य कश्यप ऋषिः। रुद्रो देवता। अनुष्टुप्छन्दः। प्रत्यक्षकृता एतदादयः पञ्च मन्त्राः॥ ॐ स्वाहा स्वधा वषण्णम इति पञ्च ब्रह्मणो नामानि। वाङ्मनःकायैराराध्याधीनात्मत्वसम्पादनं ब्रह्मत्वापरनामधेयं नमः शब्दार्थः। हे रुद्र तव स्वभूताय मन्यवे क्रोधाय नमोऽस्तु। अस्त्विति वक्ष्यमाणमन्त्रादनुषज्यते। रोदयति सर्वमन्तकाले इति रुद्रः। रोदेर्णिलुक्चेति रक्प्रत्ययः। पौराणिकादयस्तु बहुधा वदन्ति। रुतौ नादान्ते द्रवति द्रावयतीति वा रुद्र इति केचित्। पृषोदरादित्वाद्यथाभिमतप्रत्ययविकारार्थविशेषलाभः। रुत्या वेदरूपया धर्मादीनवलोकयति प्रापयतीति वा रुद्र इत्यन्ये। रुत्या वाग्रूपया वाच्यं प्रापयतीति केचित्। रुत्या प्रणवरूपया स्वात्मानं प्रापयतीति इतरे। रुद्रो रौतीति सत्ये रोरूयमाणो द्रवति प्रविशति मर्त्यानिति रुद्र इत्यन्ये। यथा। "त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ२ आविवेशे"ति। अन्ये ब्रुवते। रुक्तेजः लुवकारेकाररेफाश्चेति। भूम्नि नित्ययोगे वा रप्रत्ययः। वर्णव्यावृत्या रुद्रस्तेजस्वीति। यद्वा। रोधिका बन्धिका मोहिका वा शक्तिस्तद्वांस्तस्या द्रावयिता वा भक्तेभ्यो रुद्रः। रुदं संसारदुःखं द्रावयती-

ति रुद्र इति केचित् । यथा "अशुभद्रावको रुद्रो यज्जहार पुनर्भवम् । तस्माच्छिवस्ततो रुद्रशब्देनात्राभिधीयत "इति । रुतिं शब्दं राति ददातीति प्राणो रुद्रइत्यन्ये । रुतिंशब्दं वेदात्मानं ब्रह्मणे ददाति कल्पादाविति रुद्र इत्यपरे । यथा । "यो वै वेदा ऽश्च प्रहिणोति तस्मा "इति । एवं तीर्थकारैः स्वस्वसमयानुगुणं रुद्रपदं व्युत्पाद्यते । मन्यतेर्दीप्तिकर्मणो यजिमनिशुंधिदसिजनिभ्योयुरितियुप्रत्ययः । मन्युः क्रोधः क्रोधात्मिका तव शक्तिः शान्तिरूपा भवतु । मा वधिष्ट भक्तानिति । भक्तविषये तस्योपसंहारं प्रार्थयते । एवमिष्वादिष्वपि वेदितव्यम् ॥ उतो । उत उ इति निपातसमाहारोयं । अपिचेत्यस्यार्थे वर्त्तते । ते तव इषवे शराय नमः ॥ "त इषु ऽस ऽस्कुर्वताग्निमनीक ऽसोम ऽशल्यं विष्णुं तेजनं" इत्येवं रूपा वैदिकी देवस्येषुः । शाखान्तरे च । "तस्या अग्निरनीकमासीत् सोमः शल्यो विष्णुस्तेजनं वरुणः पर्णानी"ति ॥ किञ्च ते धन्वने धनुषे च नमोऽस्तु ॥ "कनकशैलो देवस्य धनु" रिति पौराणिकाः ॥ महाभारते तु " स कृत्वा धनुरोङ्कारं सावित्रीं ज्यां महेश्वरः । हयांश्च चतुरो वेदान् सर्वदेवमयं रथ" मित्युक्तम् ॥ धनुःशब्दपर्यायो धन्वन् शब्दः । दधातेर्वा वनिपि नुम् ह्रस्वः । उतापि च ते तव बाहुभ्यामपि नमो ऽस्तु । प्रसिद्धौ बाहू द्विवचनमतन्त्रम् । बहवो हि देवस्य बाहवः । प्रकृतशरशरासनव्यापृतबाहुद्वयाभिप्रायं वा । अत्र सर्वेषां व्यसनानां मन्युर्मूलमिति तस्य पूर्वं नमस्कारः कृतः ततः साक्षाद्व्यसनकारित्वान्मन्युसमनन्तरमिषुर्नमस्कृता । तत इषुसमनन्तरं तदपादानभूताय धनुषे च नमस्कारं प्रायुङ्क्त । ततस्तदुभयव्यापृतौ बाहू नमश्चक्रे इति केचिदाहुः । एते मन्युप्रभृतयो देवस्य बोधविशेषाः क्रोधादिकार्यकारित्वात्तत्तद्भावेन रूप्यन्त इति । इत्थमनेन मन्त्रेण देवस्य घोरा तनूर्जगदुपसंहारप्रवृत्ता प्रसाद्यते ॥

अथास्य मन्त्रस्य पुरश्चरणादिकं ब्रूमः । कृच्छ्रं द्वादशरात्रं चरित्वा एकादशसहस्रमभिहितदिनानि निरन्तरं जपन् कृतपुरश्चरणो भवति । ततो ऽनेन प्रदक्षिणं नमस्कारं च कुर्यात् ततो दक्षिणामूर्त्तिसन्निधावेकादशसहस्रजपादशेषं पापं नश्यति । ततो लक्षजपात् सप्तजन्मकृतं पापं नश्यति । तस्मिन्नेव दक्षिणामूर्त्तिसन्निधौ अग्निं निधाय घृतपायसं श्रपयित्वा स्वाग्नौ जुहुयात् साक्षादेवं पश्यति । तस्मिन्नेव सर्वतोऽरत्निमात्रमग्निकुण्डं कृत्वा स्वाग्नौ कापिलेन घृतेन शतसहस्रं जुहुयात् गाणपत्यं लभते । अथैतयर्चा राज्ञो वक्ष्यते । राजा पुरश्चरणसिद्धेन ब्राह्मणेन लिङ्गे पूजां कारयेत् । तत्प्रकारो वक्ष्यते । लिङ्गस्य दक्षिणतोऽग्निकुण्डं विधाय मथित्वाऽग्निं निधाय

नित्यवदाज्येन दूर्वाभिः शुद्धेन तन्दुलेन शमीसमिद्भिः प्रत्येकमष्टसहस्रं जुहुयात्। देवस्य संनिधौ जपेदष्टसहस्रम्। देवालयमभितः प्रदक्षिणमष्टसहस्रम्। ताण्डवं देवस्य सन्निधौ। प्रणामनमस्कारावप्यष्टसहस्रौ। एतैः कर्मभिर्भगवाननतिप्रसन्नो भवति॥ ध्यानम्। आकर्णकृष्टे धनुषिज्वलन्तीं देवीमिषुं भास्वति संदधानम्। ध्यायेन्महेशं महनीयवेषं देव्या युतं योधतनुं युवानम्॥ १॥

॥ द्वितीयामृचमाह॥

या त इषुः शिवतमा शिवं बभूव ते धनुः।
शिवा शरव्या या तव तया नो रुद्र मृडय इति॥२॥

या ते इषुः शिवतमेति शिवऽतमा शिवम् बभूव ते धनुः॥
शिवा शरव्या या तव तया नः रुद्र मृडय॥ २॥

सा० भा० हे रुद्र ते त्वदीया येयमिषुः शिवतमा शान्ततमा बभूव। तथा ते त्वदीयं यद्धनुः शिवं शान्तं बभूव। तथा या च तव शरव्या तवेषुधिः। तया शान्तया इष्वा तेन च शान्तेन धनुषा तया च शान्तया शरव्यया नोऽस्मान्मृडय सुखय। भक्तेषु प्रवृत्त्यभावात् तेषां शान्तत्वम्॥ २॥

म०भा०भा० यात इषुः शिवतमेत्यस्यात्रेयऋषिः। शम्भुर्देवता। अनुष्टुप्छन्दः। हे रुद्र या ते तव इषुः शिवतमा शान्ततमा अतिशयेन भक्तानां सुखकरी। न केवलं हस्तालङ्कारमात्रभूता बभूवेति वक्ष्यमाणमनुषज्यते भवतीत्यर्थः। छन्दसि लुङ् लङ्लिट इति वर्त्तमाने लिट्। शिवं बभूव ते धनुः। तत्रापि यच्छब्दो ऽध्याहार्यः। यच्च ते धनुः शिवं बभूव। ते भक्तान्प्रति सुखकरं भवति न केवलं हस्तान्तरमलङ्करोति। या च तव शरव्या शिवा भक्तानां सुखकरी च। शृणातेर्हिंसाकर्मण उ प्रत्यये शरुशब्देनायुधमुच्यते। "धुनिः शिमीवाञ्छरुमाॅ॒ ऋजीषी-" ति हि दृश्यते। ततः समूहे स्वार्थे वा य प्रत्ययः तदन्तं च क्षेपणीये चक्रादौ वर्त्तते। दृश्यते हि। " अवसृष्टा परापतशरव्ये ब्रह्मसᳲशिते "ति। संज्ञाशब्दत्वात्स्त्रीलिङ्गता। यद्वा। पाशादिलक्षणो यप्रत्ययः। छान्दसमन्तस्वरितत्वम्। यद्वा। शरवः शरास्तेभ्यो हिता शरव्या इषुधिः पूर्ववत्स्त्रीलिङ्गता। सर्वासामिषूणां शिवत्वात्तदाधारस्यशिवत्वप्रार्थना॥ यथा। ग्रामः प्रसीदत्विति। यद्वा माभूदिषूणामपादानमित्याशास्ते। यथा वक्ष्यते। " अथो य इषुधिस्तवारे अस्मन्निधेहि त मिति "। तया नो अस्मान् मृडय सुखय। कयाऽ नन्तरम-

कृतया शरव्यया उपलक्षणत्वाच्च इष्वा तया तेन च धनुषा । यद्वा लिङ्गसंख्ये अविवक्षिते । व्यत्ययो वा द्वयोः । तैरिष्वादिभिरस्मान्मृडयेत्यर्थः । यद्वा करणविभक्तेः सुपांसुलुगितियादेशः । एवमीदृशीं शान्तां तनुं गृहीत्वाऽस्मान् मृडयेत्याशास्ते । घोरतनूपसंहारार्थं । संज्ञापूर्वकोविधिरनित्य इति मृडेर्लघूपधगुणो न क्रियते । तवममौछन्दसीति तव शब्दआद्युदात्तः । एतन्मन्त्रम् द्वादशदिनानि चरुभोजी जपित्वा कृतपुरश्चरणो विनियोक्तुं योग्यो भवति । अन्नार्थी ततः तिलतन्दुलयावकामलककल्कमेकादशसहस्रं जुहुयादन्नवानभिजायते । एतेन राजा दुर्भिक्षनिवारणार्थं तिलगुडमिश्रितचरुणा स्वाग्नौ शतसहस्रमाहुतीः कारयेत् । ततः सुभिक्षमभिजायते राज्ये । ध्यानम् । ध्यायेद्देवं सुस्मितं स्पन्दनस्थं देव्यासार्धं तेजसा दीप्यमानम् । इष्विष्वासालङ्कृताभ्यां कराभ्यां शूराकारं स्तूयमानं सुराद्यैः ॥ २ ॥

॥ तृतीयामृचमाह ॥

या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी ।
तया॑ नस्त॒नुवा॒ शन्त॑म॒या गिरि॑शन्ता॒ऽभिचा॑कशीहि इति ॥३॥

या ते॒ रु॒द्र॒ शि॒वा त॒नूः अघो॑रा अपा॑पकाशि॒नीत्यपा॑पका॒-शि॒नि॒ ॥ तया॑ नः॒ त॒नुवा॑ शन्त॑म॒येति॒ शऽन्त॑म॒या गिरि॑श॒न्तेति॒ गिरि॑ऽश॒न्त॒ अ॒भीतिं॒ चा॒क॒शी॒हि॒ ॥ ३ ॥

सा० भा० द्वे हि रुद्रस्य तनू तथा चोपरिष्टादाम्नायते "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्येति" । हिंसिका घोरा अनुग्राहिका शिवा । हे रुद्र ते तव या तनूः शिवा अस्मास्वनुग्रहकारिणी अतएव अघोरा हिंसिका न भवति । अघोरत्वमेव स्पष्टीक्रियते । अपापकाशिनी पापं हिंसारूपम् अनिष्टं प्रकाशयतीति पापकाशिनी तादृशी न भवतीति अपापकाशिनी । गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यो यः शं सुखं तनोति स गिरिशन्तः तस्य सम्बोधनम् हे गिरिशन्त शन्तमया अतिशयेन सुखकारिण्या तया तनुवा अभिचाकशीहि मामभिलक्ष्य प्रकाशं कुरु । तादृशीं त्वदीयां तनुं प्रकाश्य मां सुखिनं कुर्वित्यर्थः ॥ ३ ॥

भ० भा० भा० या ते रुद्र शिवा तनू रघोरेत्यस्य काश्यपऋषिः । शम्भुर्देवता । स्वराडनुष्टुप्छन्दः । द्व्यक्षराधिकत्वात् । बृहतीति केचित् । "दशकौ चैवाष्टकौ

च बृहती"ति वचनात् । शान्ता तनूर्द्विविधा । सायुधा निरायुधा च । तत्र प्रथमाऽनंतरेण मन्त्रेण प्रतिपादिता । इतरा तनुरनेन प्रतिपाद्यते । हे रुद्र या ते तव शिवा शान्ता अभयहेतुः तनूः शरीरं । यामाह शिवान्येति । तनुशब्दपर्यायस्तनूशब्दः । ऊप्रत्ययान्तः । अघोरा अक्रूरा । स्वपराधीनभयद्वयहेतुत्वाभावप्रतिपादनार्थं शिवेत्युक्तेऽपि अघोरेति पुनर्वचनम् । तदेवाह । अपापकाशिनी । पापं व्यसनं तस्याऽप्रकाशयित्री । व्यसनहेतूनामायुधानामभावात् । उभयत्राप्यव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा पापफलानां दुःखानामप्रकाशयित्री । पापविनाशहेतुत्वात्स्मर्तॄणां । तया तनुवा तन्वा । शन्तमया । सुखतमया स्मर्तॄणामतिशयेन सुखहेतुभूतया निरतिशयानन्दस्वभावया । इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमित्युवङादेशः । नोऽस्मानभिचाकशीहि । अस्मान्प्रति पुनःपुनः प्रकाशय । काशतेश्छान्दसं ह्रस्वत्वम् । यद्वा चाकशीतिः पश्यतिकर्मा । यङ्लुगन्तश्छान्दसः । अयमर्थः । शन्तमया तन्वा इत्थम्भूतस्त्वमस्मानाभिमुख्येनानुग्रहदृष्ट्या पश्येति । हे गिरिशन्त । गिरौ कैलासे नित्याविर्भूतो यः प्राणिभ्यः शं तनोति स गिरिशन्तः । तनोतेर्डप्रत्ययः । यद्वा गिरिर्मेघः तत्र स्थितो यः प्राणिभ्यः पर्जन्यरूपेण शं तनोति । अथवा गिरि वाचि स्थित्वा वेदे विष्ठन्नर्थरूपेण शं तनोति । प्रणवे वा तिष्ठन् ध्येयरूपेण निरतिशयब्रह्मानन्दलक्षणं शं तनोति । हलदंतात्सप्तम्या इत्यलुक् केचिदाहुः । कंशंभ्यामिति मत्वर्थीयस्त प्रत्ययः । कैलासादिषु स्थानेषु यः सञ्जातसुखो वसति स गिरिशन्त इति ॥

अथास्य मन्त्रस्य पुरश्चरणं । हविष्याशी त्रिरात्रं जपन् कृतपुरश्चरणो भवति । अथैतया गोशान्तिं कुर्यात् । गोष्ठमध्ये सर्वतो हस्तमात्रमग्निकुण्डं विधाय प्रथितेऽग्नौ वैकङ्कतापामार्गसमिधां दधिमधुघृताक्तानामयुतं जुहुयात् । अथानेनैवापरां गोशान्तिं वक्ष्यामः । ब्राह्मणैर्घटजलमभिमन्त्रितं सर्वगन्धाधिवासितं कृत्वा शतसहस्रं जपित्वा गाः प्रोक्षेत् । गवां शान्तिर्भवति । ध्यानम् । स्मेराननं चन्द्रकलावतंसं गङ्गाधरं शैलसुतासहायम् । त्रिलोचनं भस्मभुजङ्गभूषणं ध्यायेत्पशूनां पतिमिशितारम् ॥ ३ ॥

॥ चतुर्थीमृचमाह ॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्इति ॥४॥

याम् इषुंम् गिरिशन्तेतिगिरिऽशन्त हस्ते बिभर्षि अस्तवे

शिवाम् गिरित्रेति गिरिऽत्र ताम् कुरु मा हिंसीः पुरुषम् जगत् ॥ ४ ॥

सा० भा० हे गिरिशन्त यामिषुं बाणं अस्तवे वैरिषु प्रक्षेप्तुं हस्ते बिभर्षि । गिरिं कैलासाख्यं त्रायते पालयतीति गिरित्रः तत्संबोधनम् हे गिरित्र तथाविध हे रुद्र ताम् हस्ते धृताम् इषुं शिवाम् अस्मासु शान्तां कुरु । पुरुषं अस्मदीयं मनुष्यम् जगत् मनुष्यव्यतिरिक्तमपि जङ्गमं गवादिकम् मा हिंसीः ॥ ४ ॥

भ० भा० भा० यामिषुं गिरिशन्त शिवेनवचसेत्येतयोर्गौतम ऋषिः । गोधूम इति केचित् । रुद्रो देवता । यामिषुमिति निचृदनुष्टुप् । शिवेन वचसेत्यनुष्टुप् । आभ्यां त्रिपुरदहनप्रवृत्ता घोरा तनूः प्रसाद्यते । हे गिरिशन्त व्याख्यातम् । यामिषुं हस्ते बिभर्षि धारयसि । किमर्थम् अस्तवे देवानां प्रार्थनानन्तरं हन्तव्यानसुरान्प्रति क्षेप्तुं । यामाहुर्देवाः । "क इमामसिष्यतीति । रुद्र इत्यब्रुवन् । रुद्रो वै क्रूरः । सोस्यत्विति । सोऽब्रवीत् वर"मिति । तुमर्थे सेसेमिति तवेन् प्रत्ययः । यद्वा त्रिपुरतृणदहनानन्तरं यां कृतार्थां यथोक्तकारिणीमुपसंहर्तुं हस्ते बिभर्षि तामिषुं शिवां कल्याणकरीं कुरु । त्वदभक्तान्प्रति यथा हन्तव्यानेव विषयीकरोति तथाऽवधातव्यम् । मा हिंसीः । मा त्वं हिंसीः पुरुषं साधुवृत्तं त्वद्भृत्यम् । स एव हि पुरुषव्यपदेशमर्हति । किञ्च जगज्जङ्गमं गोमहिष्यादिकं यत् पुरुषव्यतिरिक्तं तच्च मा हिंसीः । प्रदर्शनत्वात् । स्थावरमपि वृक्षलतादिकमपि माहिंसीः एवं पुरुषादिपरिहारेण हन्तव्यैकविषयीकरणमिषोः शिवत्वम् । हे गिरित्र गिरिं कैलासं त्रायते निवासत्वेन बहु मन्यत इति गिरित्रः । आतोऽनुपसर्गेकः । यद्वा गिरेर्मेघस्य त्रायकः वर्षयितृत्वात् । यद्वा गिरिसदृशस्य रथस्य त्रायकः तदवयवानां देवानां त्रायकत्वात् । यद्वा गिरां याच्ञावचसां त्रायकः परिपालकः । यथाभिप्रेतप्रदानात् । व्यत्ययेन द्विपीयार्थे सप्तमी पूर्ववदलुक् ॥ ४ ॥

॥ अथ पञ्चमीमृचमाह ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नस्सर्वमिज्जगदयक्ष्मꣳ सुमना असत्इति ॥५॥

शिवेन वचसा त्वा गिरिश अच्छ वदामसि यथा नः सर्वम् इत् जगत् अयक्ष्मम् सुमनाइति सुऽमनाः असत् ॥ ५ ॥

सा० भा० गिरौ कैलासे शेते तिष्ठतीति गिरिशः हे गिरिश त्वामच्छ प्राप्तुं शिवेन मङ्गलेन स्तुतिरूपेण वचसा वदामसि वयं प्रार्थयामहे । यथा येन प्रकारेण नोऽस्मदीयं सर्वमिज्जगत् । इच्छब्दोऽवधारणे । यथा सर्वमपि मनुष्यपश्वादिकं जङ्गमजातं अयक्ष्मं रोगरहितं सुमना असत् सौमनस्योपेतम् भवति तथा कुरु ॥ ५॥

म० भा० भा० अथ द्वितीया । शिवेन वचसेति । हे गिरिश गिरौ कैलासे शेतइति गिरिशः गिरौडश्छन्दसि इतिडः । यद्वा प्रशस्तोगिरिरस्यास्तीति निवासत्वेनेति । लोमादिलक्षणःशः । यद्वा गिरेः कैलासस्य मेघस्य वा गिरां वाचकवेदप्रणवात्मनां ईशः ईश्वरः । पृषोदरादित्वात् ह्रस्वत्वम् । शिवेन वचसा त्वदीयगुणसङ्कीर्त्तनपरतया कल्याणकरेण तव प्रीतिकरेण वा स्तोत्रलक्षणेन वचनेन त्वामेव समग्रैश्वर्यगुणसंयुक्तं अच्छ आभिमुख्यकरणेन वदामसि वदामः स्तुमइत्यर्थः । इदन्तोमसि । निपातस्य चेति संहितायां अच्छशब्दस्य दीर्घत्वम् । अच्छेत्यव्ययमाभिमुख्ये वर्त्तते । आप्तुमित्यस्यार्थइति नैरुक्ताः । अशिवेन हि वचनेन देवः क्रुध्येत् । यथा । "मा त्वा रुद्र चुक्रुधा मा नमोभिर्मा दुष्टुती वृषभमासहूती"ति । तस्माच्छिवेन वचसा त्वां स्तुमः । किमर्थमितिचेत्तदाह । यथा नः अस्माकं सम्बन्धि सर्वं मित् सर्वमेव जगज्जङ्गमं पुत्रादिकं पश्वादिकं च । एवकारकरणात्स्थावरं च वृक्षादिकम् । अयक्ष्ममरोगम् । नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुमनाः । अत्र लिङ्गव्यत्ययः । शोभनमनस्कं च । सोर्मनसीत्युत्तरपदाद्युदात्तत्वम् । असतस्यात् । अस्तेः पञ्चमो लकारः । लेटोडाटावित्यडागमः । यत्प्रकारमिदं तदर्थं त्वां स्तुमः । यद्वा । कथमित्याकाङ्क्षायामाह । यथा त्वयि स्तूयमाने इत्थमिदं सम्पद्यते तथा स्तुम इति ॥

एतयोः पुरश्चरणमेकविंशति दिनानि । निरन्तरं जपः । ततः कृतपुरश्चरण एताभ्यामकालमरणप्रतिघातं कुर्यात् । सिद्धेन ब्राह्मणेन राजाकारयेदकालमरणं न भवति राष्ट्रे । आभ्यां तिलव्रीहिगोधूमयवानां दधिमधुघृताक्तानां लक्षं जुहुयात् एकविंशति दिनानि । तस्मिन् राष्ट्रे अकालमरणभयं न भवति । नवभिर्दिनैरुपद्रवा नश्यन्ति । अष्टादशभिर्दिनैरखिलं जगदकालमरणमुपशमयति । ध्यानम् । सांग्रामिकेण वपुषा प्रविराजमानं हप्यत्पुरत्रयतृणाशनिमन्दहासम् । दैत्यान् दिधक्षुमचलेश्वरचापपाणिं ध्यायेत्पुरारिममरौघरथाधिरूढम् ॥ ५ ॥

---

१ क० ख० ग० घ० ङ० 'छा' इति पाठान्तरम्

२ ख० ग० अत्र यथेति नास्ति

३ ख० ग० पेतं यथा भवति

॥ षष्ठीमृचमाह ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहीँश्च सर्वाञ्जम्भयन्सर्वाश्च यातुधान्यः इति ॥ ६ ॥

अधीति अवोचत् अधिवक्तेत्यधिऽवक्ता प्रथमः दैव्यः भिषक् अहीन् च सर्वान् जम्भयन् सर्वाः च यातुधान्यइतियातुऽधान्यः ॥ ६ ॥

सा० भा० यो रुद्रोऽधिवक्ता अधिकोऽयमित्येवं सर्वेषामग्रे मां प्रतिवक्तुं क्षमः तेनोक्ते सति मम सर्वाधिक्यं तदानीमेवास्तीति । अतस्तादृशो रुद्रोऽध्यवोचत् । मां सर्वाधिकं वदतु । कीदृशोऽधिवक्ता । प्रथमः । देवानां मध्ये मुख्यः । दैव्यः । सर्वान् देवानर्हति । स्वयं देवान् पालयितुं क्षम इत्यर्थः । भिषक् । एतस्य ध्यानमात्रेण सर्वरोगोपशमनादयं चिकित्सकः । किं कुर्वन् । अहींश्च सर्वान् । सर्पव्याघ्रादीन् सर्वानपि । सर्वाश्च यातुधान्यः सर्वा अपि राक्षसजातीः जम्भयन् विनाशयन्[1] ॥ ६ ॥

भ० भा० भा० अध्यवोचदधिवक्तेत्यस्यानुष्टुप् । निचृदितिकेचित् । कण्व ऋषिः । शम्भुर्देवता । एतदादयश्चत्वारो मन्त्राः परोक्षकृताः । अध्यवोचत् । अधिब्रवीतु । छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् । अधिकमध्यारुह्य वा वचनमधिवचनम् । पक्षपातेन वचनमित्यर्थः । यथा "ब्राह्मणायाधिब्रूया"दिति । यद्वा उपरिभावेन ऐश्वर्येण वचनं अधिवचनं भक्तानस्मान् प्रति अधिब्रवीतु । अधिवक्ता अधिवचनस्वभावः । सदा भक्तेभ्यः अधिवचनसमर्थो वा । यद्वा अर्हेकृत्यतृचश्चेतितृच् । अधिवक्तुमर्हन् । अनीश्वरा अधिब्रुवन्तो हास्या भवेयुः । कृदुत्तरपदप्रकृतिस्वरत्वं । तदेवार्हत्वमाह । प्रथमः प्रधानभूतः । दैव्यः देवेषुभवः । देवाद्यञञाविति यञ् । यद्वा देवनं देवः । दिव्यर्थानां क्रीडादीनामन्यतमः । तत्र भवः । क्रीडायां सुखरूपः । विजिगीषायां जयरूपः । व्यवहारे विविक्तरूपः । द्योतने प्रकाशरूपः । स्तुतौ स्तुत्यरूपः । गतौ गन्तव्यरूपो वायुरूपो वा । यद्वा दिव्यज्ञानोपपन्ना देवाः तेषु भवः प्रथमः । दिव्यज्ञानोपपन्नानां मुख्य इतियावत् । भिषग्वैद्यः । व्याधितापसंसारादीनां व्यसनानां चिकित्सक इत्यर्थः । "भिषक्तमं त्वा भिषजां शृणोमी"ति च मन्त्रान्तरम् । भिषजचिकित्सायां क-

---

[1] स० ग० ङ० सर्वानपि राक्षसान् जम्भयन्

ण्वादिः। ते हि धातवः प्रातिपदिकानि च। यद्वा भियां सादयिता नाशयिता भिषक्। यद्वा भीतो सज्जते मनसा प्राप्यते। अभयत्वात्। यद्वा देहभेदनैः सीदति सज्जति अनुगृह्णाति वा भिषक्। पृषोदरादिः। किंकुर्वन्नधिब्रवीतु। अत्राह। अही-श्चसर्वाञ्जम्भयन्। जम्भनेन हेतुना। जम्भनं नाशनं तदर्थमित्यर्थः। लक्षणहे-त्वोरितिहेतौ शता। आगत्य हिंसन्ति जन्तूनिति अहयः। हननशीलाः प्रत्यक्षं प्रजानां हिंसकाः व्याघ्रसर्पवृश्चिकादयस्तान् सर्वान् जम्भयन् सूदयन्। च शब्दोऽवधारणे सर्वानित्यस्यानन्तरम् द्रष्टव्यः। सर्वानेवजम्भयन्निति। आ-ङि श्रिहनिभ्यां ह्रस्वत्वं चेति डिप्रत्ययः। तत्र चोदात्तइत्यधिकारादुपपदस्यो-दात्तत्वम्। सर्वाश्च यातुधान्यः। सर्वाश्च यातुधानजातीः जम्भयन्। शसि वाछन्द-सीति पूर्वसवर्णदीर्घत्वाभावः। यातयन्ति दुःखयन्ति यातवः दुःखयितारो मा-याः। यततेः क्लेशकर्मणो ण्यन्तादुप्रत्ययः। ता निधीयन्ते तिष्ठन्ति एतेष्विति यातु-धानाः। अधिकरणे ल्युट् ततो जातिलक्षणोङीष्। उदात्तस्वरितयोर्यण इति विभ-क्तिः स्वर्यते। एतदुक्तं भवति। आजिघांसून्सर्वान्। वृश्चिकप्रभृतीनशान्तान् सिं-हव्याघ्रचोरादींश्च प्रत्यक्षेण हन्तुमुद्युक्तान् परोक्षेण पीडां कुर्वतो मायाविनो रक्षः-पिशाचादीन् व्याध्यपस्मारादींश्च सर्वान् सूदयन्। माभैष्ट युष्मान् रक्षिष्यामि इत्यधिवक्तुमर्हन् देवोऽस्मानधिब्रवीत्विति॥

अथास्य मन्त्रस्य पुरश्चरणम्। अर्धकृच्छ्रं चरित्वा ततः परं पञ्चदिनानि शाकमूलयवचरुभोजी दिवाऽऽवश्यकाऽविरोधेन तिष्ठन्निरन्तरं जपन्कृतपुरश्च-रणो भवति। ततोऽनेन राजा रक्षां कारयेत्। सर्वरक्षार्थं श्वेतसिद्धार्थतन्दुलदूर्वा-यवैश्च समैराज्यसिक्तैरात्मनेऽग्नौ मथिते वा नित्यवदष्टसहस्रहोमः। विशेषेणा-युर्थं दशसहस्रहोमः। तस्मिन्नेवतिलगुडयवपयोमिश्रितचरुणाष्टसहस्रहोमः। राजा दीर्घायुर्भवति। सर्वत्र काले च दक्षिणां दद्यात्। दक्षिणा च त्रिविधा। उत्तममध्यमाधमभेदेन। सुवर्णनिष्कं दशसहस्रं दक्षिणोत्तमा। पञ्चसहस्रं मध्यमा। त्रिसहस्रमधमा। अथवा। त्रिशतमुत्तमा। द्विशतं मध्यमा। निष्कशतमधमा। यस्मिन् कर्मणि कर्माङ्गं दक्षिणा तु विधीयते। प्रथमं दक्षिणां दद्यात् पश्चात् कर्माङ्गदक्षिणाम्। एवं सर्वत्र काले दक्षिणां दद्यात्। यद्वा। उत्तमा चतुःषष्टिः। मध्यमा द्वात्रिंशत्। चतुर्विंशतिरधमा। बहुकर्तृकेषु प्रतिपुरुषं उत्तमा दात-व्या। एककर्तृके एकस्यैव। अथाप्युदाहरन्ते। " अत्यल्पदक्षिणो यज्ञो यज-मानं शमयते " इति। राज्ञां तत्सदृशानां चोत्तमा दक्षिणा दातव्या। अन्येषां म-ध्यमादिका। विभवे सति यो मोहान्न कुर्याद्विधिविस्तरम्। नैव तत्फलमा-प्नोति प्रलोभाक्रान्तमानस इति। दशपुरुषकर्तृके सहस्रं दक्षिणा देया। पञ्च-

कर्त्तृके चतुष्कर्तृके वा पञ्चशतम् । एककर्त्तृके त्रिशतम् । आचार्यस्य द्विगुणम् । आचार्यो भगवानेवेति मन्तव्यः । सर्वत्रैवंविधा दक्षिणा देया । तत्राग्नौ मन्त्रकलशं निदध्यात् । अग्नेः पुरो मन्त्रकलशस्थापनं सौवर्णं राजतं वा कलशं स्थापयेत् । तत्राग्नौ देवमावाह्य तत्सन्निधौ होमः कार्यः । होमान्ते कलशोदकेन राजानं प्रोक्षेत् । गुरोरेव नित्यं विशेषकारी राजा कृतरक्षो भवति । अनेनैवापरमपि वल्मीकपथं गच्छन् कार्पासबीजलवणसिद्धार्थानेकादशकृत्वोऽभिमन्त्र्य यां दिशं गच्छेत्तां वर्जयित्वाऽन्यासु दिक्षु प्रक्षिपेत् । ततः शुद्धो व्रपन् गच्छेत् । व्याघ्रतस्करब्रह्मराक्षसयक्षभूतादिभ्यो मुच्यते । अनेनैवापरं रोगनाशनं प्रवक्ष्यते । आतुरः सर्षपान् सप्ताभिमन्त्रितान्कृत्वा शिखायां बध्वा स्थापयेदारोग्यं स्यात् । श्वेतसर्षपैरेवं कृतैः कुमारग्रहादिभ्यो मुच्यते । नागरं पलमात्रमभिमन्त्र्य पयसि क्षिप्त्वा क्राथयित्वाऽऽत्माऽष्टसहस्रं वाऽष्टशतं हुत्वा शेषं पिबेत् । गर्भरोगा नश्यन्ति । ध्यानम् । चन्द्रार्धमौलिं कालारिं व्यालयज्ञोपवीतिनम् । ज्वलत्पावकसंकाशं ध्यायेद्देवं त्रिलोचनम् ॥ ६ ॥

॥ सप्तमीमृचमाह ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो
वैषाꣳ हेड ईमहे इति ॥ ७ ॥

असौ यः ताम्र अरुणः उत बभ्रुः सुमङ्गलइतिसुऽमङ्गलः ये च इमाम् रुद्राः अभितः दिक्षु श्रिताः सहस्रश इति सहस्रऽशः अवेति एषाम् हेडः ईमहे ॥ ७ ॥

भा० भा० यो रुद्रः असौ मण्डलस्याऽऽदित्यरूपः स च ताम्रः उदयकाले अत्यन्तरक्तः । अरुणःउदयादूर्ध्वमीषद्रक्तः । उत अपि च बभ्रुः ततोऽपि ऊर्ध्वं पिङ्गलः । एवमन्येऽपि वर्णास्तत्तत्कालगता उन्नेयाः । सुमङ्गलः नानावर्णः सन् तदा तदा अन्धकारादिनिवर्त्तकत्वादत्यन्तमङ्गलः । ये चाऽन्ये रश्मिरूपा रुद्रा इमामभितः अस्याः भूमेः परितः दिक्षु श्रिताः प्राच्यादिदिक्ष्ववस्थिताः । ते च सहस्रशः अनेकसहस्रसंख्याकाः एषां आदित्यतद्रश्मिरूपाणां सर्वेषां रुद्राणां हेडः क्रोधसदृशं तीक्ष्णत्वं अवेमहे भक्तिनमस्कारादिना निवारयामः ॥ ७ ॥

म०भा०भा० असौ यस्ताम्र इत्याद्या आस्तारपङ्क्तिः। "परौ चेद्द्वादशाक्षरावा-स्तारपङ्क्ति"रितिवचनात्। "पञ्चपदा पङ्क्ति" रिति केचित्। असौ यो ऽवसर्पती-तिजगतीषट्पदा। एतयोः काल ऋषिः। मरुत्वानितिकेचित्। आदित्यात्मा रुद्रो देवता। "असौ यस्ताम्र इत्यनेनादित्यमुपतिष्ठते"इति शतपथब्राह्मणम्। देवस्य जगदुपसंहारकमूर्तिषु अष्टमूर्तिषु आदित्यस्याप्यन्तर्भावात्। भक्तविषये तत्प्रसा-दनमेताभ्याम् प्रार्थयते। असावित्यङ्गुल्या निर्दिशति। असावूर्ध्वलोकवर्ती आ-दित्यः। कीदृशः ताम्रः उदयसमये ऽतिरक्तः। तमःसम्पर्कात्तथा भाति। केचि-दाहुः भूछविसम्पर्कादिति। अथारुणः उदयादूर्ध्वमीषद्रक्तः। उत अपिच बभ्रुः। ततो ऽप्यूर्ध्वं पिङ्गलः। गौर इतिकेचित्। यद्वा विश्वं बिभर्त्ति बोधप्र-दानादिनेति बभ्रुः। कुभ्रश्चेति कुप्रत्ययः। सुमङ्गलः सर्वमङ्गलसमृद्धिमान् तद्धेतुत्वात्। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। एवं विधोऽ-सावादित्यो यः ईदृशादित्यरूपो यो रुद्र इत्यर्थः। ये च रुद्रा रुद्रसधर्माणः रुद्रेण समानवेषविभूतयो देवेन सृष्टाः सदैव देवस्यानुचरा वा। इमां पृथिवीमभि-तो दिक्षु श्रिताः। सहस्रशः सहस्रं सहस्रं भूत्वा तिष्ठन्ति। जगतां पुण्यपापानु-रूपं फलं दातुं। सङ्ख्यैकवचनाच्चवीप्सायामितिशस्। अभितःपरितइति द्वयमो द्वितीया केचिदाहुः। अस्यादित्यात्मनो रुद्रस्य स्वभूता रश्मिरूपा रुद्रा ये पृथिवीमभितस्तिष्ठन्ति एषाममुष्य रुद्रस्य एषां च रुद्रानुचराणां हेडः क्रोध-मनादरं वा अवेमहे। अपनयामः। स्तुतिभिर्नमस्कारैश्चेति शेषः। हेडृअना-दरे। हेडः क्रोध इतियास्कः। उभयमपि गृह्यते। विहितातिक्रमनिमित्तमस्म-द्विषयमनादरं प्रतिषिद्धसेवानिमित्तं क्रोधं चेत्युभयमप्यपनयाम इति। ईंगतो केवलोऽयं याच्ञाकर्मा। "सदावन्भागमीमहे" इत्यादौ तथा दर्शनात्। बहुलं छन्दसीति व्यत्ययेन शपो लुक्। अवपूर्वस्त्ववपनयने वर्त्तते। यद्वा। अ-र्वाचीनं यथा तथा याचामहे ॥ ७ ॥

॥ अथाऽष्टमीमृचमाह ॥

असौ योऽवसर्पति नीलंग्रीवो विलोहितः।
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं
विश्वा भूतानि सदृष्टो मृडयाति नः इति ॥ ८ ॥

असौ यः अवसर्पतीत्यंवऽसर्पति नीलंग्रीवइतिनीलऽग्रीवः

विलोहितइतिविऽलोहितः उत एनम् गोपाइतिगोऽपाः अदृशन् अदृशन् उदहार्यइत्युदऽहार्यः उत एनम् विश्वा भूतानि सः दृष्टः मृडयाति नः ॥ ८ ॥

सा०भा० यो रुद्रो नीलग्रीवः कालकूटधारणेन नीलवर्णा ग्रीवा यस्यासौ नीलग्रीवः। स एव विलोहितः विशेषेण लोहितवर्णः सन् असौ मण्डलवर्ती भूत्वा अवसर्पति उदयास्तमयौ सम्पादयितुं प्रवर्तते। तस्य च रुद्रस्य मण्डलवर्तिस्वरूपधारणे प्रयोजनमुच्यते। उत अपि च गोपाः वेदशास्त्रसंस्काररहिताः गोपाला अप्येनं मण्डलवर्त्तिनं आदित्यरूपिणं रुद्रं अदृशन् पश्यन्ति। उदहार्यः उदकानां हारिण्यः योषितोऽपि एनं अदृशन् पश्यन्ति। उत अपि चैनं मण्डलवर्तिनं आदित्यरूपिणं रुद्रं विश्वा भूतानि गोमहिष्यादयः सर्वेऽपि प्राणिनः पश्यन्ति। सर्वेषां दर्शनार्थमेव हि रुद्रस्याऽऽदित्यमूर्तिधारणम्। कैलासादिवर्ति रुद्रस्य रूपं तु वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः। तादृशो रुद्रो दृष्टः सन् नोऽस्मान् मृडयाति। सुखिनः करोत्वित्यर्थः ॥ ८ ॥

भ०भा०भा० अथ द्वितीया। असाविति प्रत्यक्षमेव दर्शयन् ब्रवीति। असावादित्यात्मा यो रुद्रः। अवसर्पति अवाचीनं सर्पति। अस्तमयसमये अधोगच्छतीव प्रतिभाति। यद्वा। अवसर्पति देशान्तरं गच्छति। अपार्थेऽवशब्दः। नीलग्रीवः। कालकूटविषालङ्कृतग्रीवः। विलोहितः स्वयं विशेषेण लोहितः। ज्वलत्पावकसदृशः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा नीलग्रीवविलोहितपदे आदित्यविशेषणे एव उभे। ग्रसन्त्युदकमिति ग्रीवा रश्मयः। ग्रसतेर्गिरतेर्वा सेवाजिव्हेत्यादिना वप्रत्ययो निपात्यते। उदयात्प्रभृति उदकस्य ग्रहणादस्तं गच्छतो यस्य नीला रश्मयस्तमसोऽभिसंसर्गात्तदानीं रश्मयस्तादृशा इव भवन्तीति। यद्वा नीलग्रीवः निलीनरश्मिर्वा। विलोहितः विविधं लोहितमुदयास्तमयकाले हि तमसः सम्पर्काल्लोहितमिव मण्डलं दृश्यते। अथाऽयं देव उदयास्तमयाभ्यां लोकयात्रां वर्तयन् आबालगोपालं प्रसिद्धः। न देवस्य मूर्त्यन्तरवत् श्रुत्यादिभिः यतः प्रतिपाद्यत इति प्रतिपादयितुमाह। उतापिच एनमादित्यरूपं देवमज्ञानां प्रथमोदाहरणभूता गोपा अप्यदृशन् पश्यन्ति। छन्दसिलुङ्लङ्लिटइति लुङ्। इरितोवेत्यङ्। तथा। अदृशन्नुदहार्यः। उदकस्य हारिकाः घटदास्यो गोपेभ्योऽ-

---

१ ख० ग० वर्ती अवसर्पति    २ ख० ग० ङ० अतिसुखिनः करोति

पिच क्षुद्राः। हरतेः कर्मण्यण् मन्थौदनेत्यादिना उदकस्योदभावः। अण्णन्तत्वान्ङीप्। उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वे उदात्तस्वरितयोर्यण इति विभक्तिः स्वर्यते। किमिदं विभज्याऽभिधीयते। सर्व एव देवस्य महिमावेदने गोपालादिकल्पा एवेति प्रदर्शयितुमाह। विश्वा विश्वानि। शेश्छन्दसिबहुलमिति लुप्यते। विश्वान्यपि भूतानि एनं भगवद्रूपं देवमदृशन्। श्रुत्यादिभिरपि दुर्ज्ञानं चक्षुषैव पश्यन्ति स देव एवं सर्वैर्दृष्टः प्रत्यक्षेणानुभूयमानोऽस्मान् मृडयाति मृडयतु सुखयतु। लेड्याडागमः। केचिदस्तंगच्छद्भगवद्विषयमेव व्याचक्षते। तत्रास्तङ्गच्छता भगवता जगतामुपकारान्प्रदर्शयितुमुपक्रमते। एनमस्तं यन्तं भगवन्तं देवं गोपाः पश्यन्ति। गवां ग्रामनगरप्राप्तिकाले प्रतीक्षमाणा उदाहार्योऽपि पश्यन्ति। अस्तं गच्छति भगवानहो इतो मुच्यामहे इति। यद्वा। अस्तमयात् प्रागेवोदकोद्धरणं कर्तव्यम् अस्तमिते तु तस्य निषिद्धत्वात् इति पश्यन्ति। किंबहुना विश्वान्यपि भूतानि एनमस्तं यन्तं पश्यन्ति। मृगशकुनवराहादीनामपि निलयगमनादेस्तदधीनत्वात्। द्विजातयोप्यग्निहोत्रसन्ध्यावन्दनकालार्थिनो भगवन्तमस्तं यन्तं प्रतीक्षन्ते। एनं तावदस्तं यन्तं देवं सर्वे ऽपि पश्यन्ति। तच्चप्रतिषिद्धं "नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचनेति"। तस्य नामयुक्तरूपतां प्रदर्शयितुं गोपादिग्रहणम्। तत्र प्रतिषिद्धेऽपि दर्शने प्रमादादुपस्थानकाले वाऽस्माभिर्दृष्टः। अस्मान् मृडयतु सुखयतु। यद्यपि प्रमादादिना दृश्यते तत्पापमपनुद्य उपस्थानफलं च दत्वाऽस्मान्मृडयतु ॥

अथैतयोः पुरश्चरणार्थं च कृच्छ्रमेकं चरित्वा षोडश दिनानि निरन्तरंजपेत्। एताभ्यामनावृष्टयां सत्यां वृष्ट्यर्थंकार्यं। आर्द्रान्तं आर्द्रादि वा। ब्राह्मणान् पञ्च सिद्धानाहूय तैः कार्यं। तेषांमुष्णीषवसनकर्णवेष्टनकण्ठाभरणकरमण्डनादि दद्यात्। सिद्धं होमद्रव्यं तिलतन्दुलयवानां दधिमधुघृताक्तानां शतसहस्रं जुहुयात्। वेतससमिधां क्षीराक्तानां तद्वत्तेषां पञ्चानामेको जपेच्चत्वारो जुहुयुरेकादश दिनानि दीक्षित्वाऽन्त्यदिने रक्ततामरसैरष्टसहस्रैः प्रत्येकमाराधयेत्। सकृज्जपित्वा कर्मकालेन व्यावृत्योपस्पृशंश्च वीक्ष्यासीताऽन्यथा प्रायश्चित्ती भवेदासमाप्तेरग्निरक्षा कर्त्तव्या। अवसानदिने भगवानादित्यो महावृष्टिं प्रमुञ्चति। वेतसपुष्पाणामयुतं जुहुयात्। सविता वरं ददाति। उद्यन्तमस्तं यन्तमादित्यमेताभ्यामुपतिष्ठेत। कण्ठदघ्ने जले स्थित्वा एताभ्या मुभयकरपूर्णजलमादित्यं अभिजपन् प्रक्षिपेत्। प्रतिदिनमष्टसहस्रं कृत्वा नव दिनानि। ततः सविता मनःकाममासंवत्सरं ददाति जपापुष्पाणां मध्वक्तानामेकविंशतिसहस्रं जुहुयात्। सवितुः प्रसादाज्जातिस्मरत्वं लभते। चतुर्वेदिकुले ज-

निः । ध्यानम् । मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् । चण्डदीधितिमखण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम् ॥ ८ ॥

॥ नवमीमृचमाह ॥

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोहं तेभ्योऽकरं नमः इति ॥९॥

नमः अस्तु नीलग्रीवायेतिनीलऽग्रीवाय सहस्राक्षायेति सहस्रऽअक्षाय मीढुषे अथोइति ये अस्य सत्वानः अहम् तेभ्यः अकरम् नमः ॥ ९ ॥

सा०भा०यः पूर्वोक्तरीत्या नीलग्रीवः स एव इन्द्रमूर्तिधारणेन सहस्राक्षः स पुनः पर्जन्यमूर्तिधारणेन मीढ्वान् सेचको वृष्टिकर्तेत्यर्थः । तादृशाय रुद्राय नमोऽस्तु । अथो अपि च ये केचिदस्य रुद्रस्य सत्वानः भृत्यरूपाः प्राणिनः तेभ्यः सर्वेभ्योऽहं नमोऽकरं नमस्करोमि ॥ ९ ॥

भ०भा०भा०ॐनमोअस्तु नीलग्रीवायत्येस्यानुष्टुप्छन्दः। ऋषिर्भगवान् शम्भुःदेवता च शम्भुरेव । नमोअस्तु नीलग्रीवाय नीलकण्ठाय । सहस्राक्षायानेकचक्षुषे इन्द्ररूपाय । बहुव्रीहौसक्थ्यक्ष्णोरितिसमासान्तः षच् । सति शिष्टश्चित्स्वरः। मीढुषे वृष्टिद्वारेण भुवः सेक्त्रे जगद्योनौ वा । स्ववीर्यस्य सेक्त्रे पुरुषरूपेण वा गर्भाणामाधात्रे । मिहसेचने । दाश्वान्साह्वान्मीढ्वांश्चेति निपातः । अथो अपिच ये अस्य देवस्य स्वभूताः सत्वानः महान्तः प्रमथगणाः तेभ्योऽप्यहं नमः नमस्कारमकरं करोमि । छान्दसो लुङ् । कृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः। ऋदृशोऽङिगुण । सीदतेः प्रईरिसद्योस्तुट्चेति क्वनिप् । बहुलवचनात् केवलादपि भवति । सदनशीला देवं प्रत्यासन्नाः सत्वानः ।

अथास्य पुरश्चरणम् । पञ्चदशदिनानि हविष्याशी निरन्तरं जपेत् । शिवसमीपे पश्चिमद्वारालये कुण्डमरत्निमात्रं सर्वतो विधाय मथिताग्रावर्कपुष्पैरमावास्यायामारभ्य दशदिनावधि प्रत्यहं सहस्रं हुत्वा घृतपायसं देवाय निवेदयेत् । सर्वार्थसिद्धिः स्यात् । अनेन च पुत्रकामानां क्रिया वक्ष्यते । पञ्च दिनानि दीक्षित्वा शम्भोरालये नदीतीरे गोष्ठे वा गृह्णीयात् देवालये चेद्देवस्योपरि

१ ख० ग० ङ० कनीलग्रीवः

अन्यत्र कुम्भे आवाह्य तस्य पश्चिमे भागेऽग्निं संस्थाप्य शमीसमिधां शमीपत्राणां दधिमधुघृताक्तानां प्रत्यहमेकादशसहस्रं जुहुयाद्दिनत्रयं पञ्चदिनानि वा दीक्षित्वा कार्यं। प्रतिदिनमष्टसहस्रं तदर्धमष्टशतं वा। तामरसपुष्पाण्युपरि विन्यसेत् तदभावे पत्रं वा । एवं कृत्वाऽन्त्यदिने अष्टसहस्रं तदर्धमष्टशतं वा ब्राह्मणान् भोजयेत्। द्रव्यत्यागं विशेषेण कुर्यात् । एकादश रुद्ररूपान् भोजयित्वा तेषां किञ्चिद्वस्तु प्रदाय दक्षिणतो देवसन्निधौ आचार्यमधिकं भोजयित्वा दक्षिणां दद्यात् । दक्षिणाप्युप्तबीजा भूमिः। मानमप्युच्यते। नवारत्निदण्डेनाष्टशतं। कुण्डलाय सुवर्णमपि प्रतिदिनं पादनिष्कं। तेन कुण्डलं निर्माय दातव्यं। कांस्यपात्रमेकाग्नेरेवमेव हि । एवं पुत्रकामी कृत्वा शम्भुप्रभावात्पुत्रवान् भवति । यावद्दक्षिणाभूमिस्तावदविच्छिन्ना सन्ततिर्भवति आसंवत्सरात्सिद्धिर्भवति । एतत्फलं सप्तजन्मना सम्बध्यते तस्मादलुप्तं कुर्यात् । ध्यानम्। शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिम् । ध्यायेत्सिंहासनासीनमुमया सहितं शिवम् ॥ ९ ॥

## ॥ दशमीमृचमाह ॥

प्रमु॑ञ्च॒ धन्व॑न॒स्त्वमु॒भयो॒रार्त्न्यो॒र्ज्याम् ।
याश्च॑ ते॒ हस्त॒ इष॑वः॒ परा॒ ता भ॑गवो वप इति ॥१०॥

प्रेति॑ मु॒ञ्च धन्व॑नः त्वम् उ॒भयोः॑ आर्त्न्योः॑ ज्याम् याः॑ च॒ ते॒ हस्ते॑ इष॑वः परेति॑ ताः॑ भ॒ग॒व॒ इति॒ भग॒ऽवः॒ व॒प ॥ १० ॥

सा०भा० हे भगवः भगवन् पूजावन् महदैश्वर्यसम्पन्न रुद्र त्वं धन्वनः त्वदीयस्य धनुषः उभयोरार्त्न्योः कोट्योरवस्थितां ज्यां मौर्वीं प्रमुञ्च अवरोपय । याश्च ते हस्ते इषवो वर्तन्ते ता अपि परावप परित्यज ॥ १० ॥

भ०भा०भा०प्रमुञ्चधन्वन इत्याद्यास्तिस्रोऽनुष्टुभः। नारदऋषिः। श्रीरुद्रो देवता। अत्रनमस्ते रुद्रेत्यारभ्य नवभिर्मन्त्रैः क्रुद्धं देवं प्रसाद्य अतः परं तस्योपसंहारकारणानि उपसंहारयितुं प्रक्रमते। तत्र द्वौ प्रत्यक्षकृतौ मन्त्रौ। तृतीयः परोक्षकृतः। प्रमुञ्च शिथिलीकुरु धन्वनः धनुषः उभयोरार्त्न्योः ज्यां कोट्योः या ज्याबद्धा तां प्रमुञ्च। अवततज्यं धनुः कुर्वित्यर्थः। तथा याश्चान्यास्ते हस्ते स्थिता इषवः जगदुपसंहर्तुं ताः परावप परित्यज्य । यथा ऽस्मान्नाभिमुखीभवन्ति तथा कुरु । तूणीर एव तिरोहिताः स्थापय । यत्रकुत्रचिद्वा अन्तर्हिताः कुरु । किमेभिर्धनुरादिभिरस्मद्भयङ्करैरिति यावत् । हेभगवः भगवन् मतुवसोरुरुसंबुद्धौ

छन्दसीति रुत्वं । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ १० ॥

॥ एकादशीमृचमाह ॥

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे ।

निशीर्य शल्यानां मुखा शिवो नः सुमना भव इति ॥११॥

अवतत्येत्यवऽतत्य धनुः त्वम् सहस्राक्षेतिसहस्रऽअक्ष शतेषुध इति शतऽइषुधे निशीर्येति निऽशीर्य शल्यानाम् मुखा शिवः नः सुमनाइतिसुऽमनाः भव ॥ ११ ॥

सा०भा० इन्द्ररूपेण सहस्रसंख्याकान्यक्षीणि यस्यासौ स त्वया । शतसंख्याका इषुधयो बाणस्थापनकोशा यस्यासौ शतेषुधिः तादृश हे रुद्र धनुरवतत्य अवरोपितज्याकं कृत्वा शल्यानाम् बाणानाम् मुखा मुखानि इषुगतलोहाना-मग्राणि निशीर्य इषुधिषु न्यग्भावेन शीर्णानि कृत्वा नोऽस्मान् प्रति सुमना अनुग्रहयुक्तः सन् शिवः शान्तो भव ॥ ११ ॥

भ०भा०मा० अथद्वितीया । अवतत्येति । मुखेतितृतीयपादान्तः । हे सहस्राक्ष । व्या-ख्यातम् । हे शतेषुधे । यस्य भूयिष्ठा इषवः सन्ति तस्य बहुभिरिषुधानैर्भवितव्य-मितिभावः । कर्मण्यधिकरणे चेतिकिप्रत्ययः । त्वं धनुः पिनाकाख्यं अवतत्य अव-ततज्यं कृत्वा शल्यानां शराणां मुखा मुखानि निशीर्य नितरां विशीर्णानि कु-ण्ठीकृतानि कृत्वा नोऽस्माकमुपरि शिवः सुमनाश्च भव । सतामप्यपचाराणां क्ष-मया शिवः शान्तो भूत्वा मद्विषये मद्भक्तोऽयमिति सुमनस्केन च नित्यं त्वया भवितव्यमिति । यद्वा इत्थमस्माभिः प्रार्थ्यमानः सुमना एव भूत्वा भयहेतूनां धनुरादीनां चोपसंहारादपगतभयहेतुः शिवो भवेति । सोर्मनसीत्युत्तरपदाद्युदा-त्तत्वम् ॥ ११ ॥

॥ द्वादशीमृचमाह ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत ।

अनेशन्नस्येषव आभुरस्य निषङ्गथिः इति ॥ १२ ॥

विज्यमिति विऽज्यम् धनुः कपर्दिनः विशल्य इतिविऽश-

ल्य॑: बाण॑वा॒निति॒ बाण॑ऽवा॒न् उ॒त अ॒नेश॑न्न॒स्य॒ इष॑वः आ॒भुः अ॒स्य॒ नि॒ष॒ङ्ग॒थिः॑ ॥ १२ ॥

सा०भा० कपर्दो जटाजूटः सोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं विगतज्याकमस्तु। उत अपि च बाणा अस्मिन् तिष्ठन्तीति बाणवान् इषुधिः स च विशल्योऽस्तु। इषुगतानां शल्यानां तदुदरे गोपितत्वेन बहिराविर्भूतशल्यरहितोऽस्तु। अस्य रुद्रस्य इषवो बाणाः इषुधौ प्रक्षिप्ताः अनेशन् वेद्धुमसमर्था भवन्तु। अस्य रुद्रस्य निषङ्गथिः बाणाधारः आभुरस्तु ईषत्प्रभुरस्तु। कुत्स्यनिखातशङ्कावासक्षितत्वेन बाणान् धारयितुमेव प्रभवतु न तु बाणाकर्षणयोग्य इत्यर्थः। अथवा निषङ्गथिः खड्गकोशः सोऽपि पूर्ववत् कचिदारोपितत्वेन खड्गं धारयितुमेव प्रभवतु न तु खड्गाऽऽकर्षणसमर्थः ॥ १२ ॥

म०भा०भा०अथ तृतीया। विज्यमिति। कपर्दोजटाजूटः तद्वतो देवस्य धनुः पिनाकाख्यं विज्यं विगतज्याकं अस्त्विति शेषः। अथास्य देवस्य बाणवानिषुधिः बाणा अस्मिन्सन्तीति सोऽपि विशल्यो विगतबाणोऽस्तु। पूर्वं बाणवानपि इदानीं विशल्यो भूयादितिभावः। उताप्यर्थे। बाणवानपीत्यर्थः। दीर्घादटीतिरुत्वम्। अतोऽटीत्यनुस्वारः। किञ्चास्य देवस्य स्वभूता इषवः अनेशन् नश्याः स्युः। छन्दसिलुङ्लङ्लिटिति मशेराशिषि लुङ् पुषादित्वात् च्लेरङ् नशिमन्योरलिघेत्वं इत्येकारः। यद्वा। अस्येषुधेरिषवः अनेशन् यत्रक्कापीषुधेरन्यत्रादृश्यास्तिष्ठन्तु। तेनाऽयं विशल्यः सम्पद्यते इति प्रकृतस्य समर्थनम्। किञ्चास्य देवस्य निषङ्गथिरप्याभुरस्तु। नितरां नियमेन वा कोशेन सज्जते इति निषङ्गः खड्गः स निधीयते यत्र स निषङ्गथिः। खड्गकोशः। परोक्षवृत्त्या धकारस्य थकारः। "परोक्षप्रिया इव हि देवा" इति। पूर्ववत्किप्रत्ययः। आ ईषत् भवतीत्याहुः। आ ईषदर्थे। विप्रसम्भ्य इति डुप्रत्ययः। व्यत्ययेनाङ्प्यपि भवति। किञ्चिन्न्यूनं भवनं आभवनं तच्चखड्गेन विना सत्तामात्रेणावस्थानं निषङ्गधारणस्वभावस्य खड्गकोशस्य निषङ्गेण सहावस्थानं पुष्कलभावस्तेन विना ऽवस्थानं आभवनमिति। तेन सोऽपि खड्गरहितो वर्त्ततामिति भावः सम्पद्यते। यद्वा निषज्जते कोश इति निषङ्गथिः खड्गः। नौषञ्जेर्घथिनिति घथिन्प्रत्ययः। आभुरस्तु न्यूनशक्तिरस्तु कुण्ठितप्रभावमीषद्भवनमिति ॥

आसां तिसृणामृचांपुरश्चरणम्। कृच्छ्रं चरित्वा ऽऽत्मानं संशोध्य नवदिनानि जपेत् सिद्धो भवति। एताभिर्युद्धकाले भूपतेरायुधान्यभिमन्त्र्य कुशक-

ण्टकानां सहस्रं जुहुयात् । युद्धोपनीताः शत्रवो हीयन्ते । ध्यानम् । उद्यद्भास्करकोटिप्रकाशमादीप्तदहनमूर्द्धानम् । भीषणभुजङ्गभूषं ध्यायेद्विविधायुधं रुद्रमिति । द्वितीयस्य ध्यानम् । रुद्रं सुरनियन्तारं शूलखट्वाङ्गधारिणम् । ज्वालामालावृतं ध्यायेद्भक्तानामभयप्रदमिति ॥ १२ ॥

॥ त्रयोदशीमृचमाह ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।

तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिभ्भुज इति ॥१३॥

या ते हेतिः मीढुष्टमेतिमीढुःऽतम हस्ते बभूव ते धनुः

तया अस्मान् विश्वतः त्वम् अयक्ष्मया परीति भुज ॥१३॥

सा० भा० हे मीढुष्टम अतिशयेन कामाऽभिवर्षक या ते हेतिः तव सम्बन्धि खड्गादिरूपं यदायुधं यदपि ते तव हस्ते धनुर्बभूव । अयक्ष्मया अनुपद्रवकारिण्या तया हेत्या तथाविधेन धनुषा च त्वमस्मान् विश्वतः परिभ्भुज सर्वतः परिपालय ॥ १३ ॥

भ० भा० भा० अथ यातेहेतिरित्याद्यास्तिस्रोऽनुष्टुभः । ऋषिर्देवता च भगवानेव । हेमीढुष्टम । मीढ्वान् व्याख्यातः । अतिशयेन सेक्ता । या ते तव स्वभूता हेतिरायुधं धनुर्नाम तव हस्ते बभूव भवति । छान्दसो लिट् । ऊतियूतीत्यादिना हिंसाकर्मणो हन्तेः क्तिन् उदात्तत्वमेत्वं च निपात्यते । तया हेत्या धनुर्नाम्न्या । अयक्ष्मया भक्तान्प्रत्यरोगहेतुभूतया । नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । विश्वतो भयहेतोरस्मांस्त्वं परिभ्भुज । सर्वतः परिपालय । सर्वकालं सर्वेण च प्रकारेण सर्वस्माद्दुरितादस्मान् रक्ष । सांहितिकोबकारोपजनश्छान्दसः । उक्तं च प्रातिशाख्ये " उपसर्गपाथ एष " इत्यादिभुजेर्विकरणव्यत्ययेन शः । यद्वा विश्वतः विश्वान् सपुत्रपौत्रानस्मान्पाहीति । सार्वविभक्तिकस्तसिः । केचिदाहुः । हेतिर्हिंसा या ते त्वत्कर्तृका हिंसा । यदर्थं तव हस्ते हिंसार्थसाधनं धनुस्तिष्ठति तया अस्मानित्यादितुल्यम् ॥ १३ ॥

॥ चतुर्दशीमृचमाह ॥

नमस्ते अस्त्वायुधायाऽनातताय धृष्णवे ।

उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने इति ॥ १४ ॥

नमः ते अस्तु आयुधाय अनाततायेत्यनाऽतताय धृष्णवे उभाभ्याम् उत ते नमः बाहुभ्यामितिबाहुऽभ्याम् तव धन्वने ॥ १४ ॥

सा॰भा॰ हे रुद्र ते त्वदीयायाऽऽयुधाय बाणरूपाय नमोऽस्तु। कीदृशायाऽऽयुधाय। अनातताय धनुषि सन्धानाभावात् अप्रसारिताय। धृष्णवे स्वरूपेण प्रहन्तुं प्रगल्भाय। किंच ते त्वदीयाभ्यां उभाभ्यां बाहुभ्यां नमोऽस्तु। तथा तव त्वदीयाय धन्वने नमोऽस्तु ॥ १४ ॥

म॰ भा॰ भा॰ अथ द्वितीया। नमस्त इति। तव स्वभूतायायुधाय नमोऽस्तु। अनातताय अनाततज्याय अस्मादेवविशेषणाद्धनुरत्रायुधं विवक्षितं। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। धृष्णवे सुदृढाय। अभक्तानां वा धर्षणशीलाय। त्रसिगृधीत्यादिना क्नुः। किञ्च ते त्वदीयाभ्यामुभाभ्यां दक्षिणोत्तराभ्यां बाहुभ्यां नमः। याभ्यां बिभीमः। एतदेव प्रकटयितुमादरार्थं पुनरपि धनुषो नमस्कारं करोति। यद्वा। पूर्वमायुधग्रहणमिषावेव वर्तते। अनातताय। अनुद्युक्तायेत्यर्थः। यद्वा। गदामुद्गरप्रभृतिकमायुधं गृह्यते। यदनाततमसज्जितमेव कुड्यलिखितसर्पादिवत्। धृष्णु भयङ्करं भवति तस्मै तावन्नमः। ततो बाहुभ्याम्। द्वित्वमविवक्षितम्। ततो धन्वने। प्रधानभूताय ॥ १४ ॥

॥ पञ्चदशीमृचमाह ॥

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य इषुधिस्तवाऽरे अस्मन्निधेहि तम् इति ॥१५॥

परीति ते धन्वनः हेतिः अस्मान् वृणक्तु विश्वतः अथो इति यः इषुधिरितीषुऽधिः तव आरे अस्मत् नीति धेहि तम् ॥ १५ ॥ हस्ते दिक्ष्विषवउभाभ्यान्द्वावि ँ शतिश्च ॥

॥ इति प्रथमोऽनुवाकः ॥

सा॰ भा॰ हे रुद्र ते त्वदीयस्य धन्वनः हेतिर्बाणशल्यरूपा अस्मान् विश्वतः सर्वतः परिवृणक्तु वर्जितान् करोतु। अस्मान् मा बाधतामित्यर्थः। अथो अपि च यस्तवेषुधिः तमस्मदारेऽस्मत्तो दूरे निधेहि स्थापय ॥१५॥ इति सायणाचार्य-

विरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये प्रथमोऽनुवाकः ॥

भ०भा०भा० अथ तृतीया। परित इति। तवेति तृतीयपदान्तः। ते तव धन्वनः धनुषः हेतिः हिंसा हननं भावसाधनो ऽत्रहेतिशब्दः धनुर्निमित्ता या हिंसा सा अस्मान् विश्वतः विश्वप्रकारं परिवृणक्तु परिवर्जयतु। यद्वा अस्मान् विश्वतः विश्वान् पुत्रपौत्रादिसहितान् सर्वप्रकारं परिवर्जयतु। अथो अन्यच्चाशास्महे। तव स्वभूतो य इषुधिः यत्र भीष्मा इषवः। तं अस्मत् अस्मत्तः आरे दूरे निधेहि स्थापय। यद्वा आरे अरीणां समूहे निधेहि। अस्मत्तः आच्छिद्य अस्मदाभिमुख्यं निवर्तयेति ॥

अथैतासामृचांपुरश्चरणम्। पूर्वोक्तानां तिसृणामिव कुर्यात्। एताभिरपि संग्रामकाले तैलमेकादशमर्दापसहस्राई द्रोण्यां प्रक्षिप्य तत्र देवमावाह्य लोकपालैः सहाराध्य स्पृष्ट्वा तैलं सप्त दिनानि प्रतिदिनमष्टसहस्रं जपेत्। तेन सिद्धतैलेन प्रदीपानेकादशसहस्रमारोप्य शत्रुराज्ये प्रत्यासन्ने राजानं विना सेनानीः पुरो गच्छेत्। दृष्ट्वा दीपज्वालां शत्रुसेना नावतिष्ठते। एतत्प्रभावादेव शत्रवो विनश्यन्ति। अन्यदपि एताभिरेवारातिनगरे सिद्धवेषधारिणो ब्राह्मणाः शक्ता मन्त्रसिद्धाः। शत्रोरभिचारं कुर्युः। राजा यदुपयुङ्क्ते वस्तु तदेताभिः स्पृष्ट्वा दृष्ट्वा च स्पर्शनदर्शनायोग्यं तन्मुखाच्छुत्वा अभिचारोऽस्त्विति जपेयुः। मन्त्रान्तेऽन्यदपि शङ्कुं निधाय नगरचतुष्पथे देवालये देवारामे सालखातयोरन्यतरस्मिन्नपि नगराङ्गभूते सहस्राभिमन्त्रितं खनेयुः। तन्नगरं शम्भुकोपात्संवत्सरत्रयान्नश्यति व्याधिना। एवं कारयितुराचार्यस्य राज्यसमं देयमिति। सर्वत्र मन्त्रप्रभावात् सिध्यति। प्रमाणबुध्या कार्यमिति। ध्यानम्। प्रणमदमरलोकमौलिमालाकुसुमरजोऽरुणपादपद्मयुग्मम्। अनवरतमनुस्मरेद्भवान्या सह जगतां पितरं पिनाकपाणिम् ॥ १९ ॥ इतिश्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये रुद्रप्रश्ने प्रथमोऽनुवाकः ॥

---

प्रथमानुवाके भगवतो रुद्रस्य या प्रधानभूता तनुः इषुधनुर्हस्ता तां बहुधा प्रसाद्य तस्य ये लीलाविग्रहा जगन्निर्वाहहेतवस्तेऽष्टभिरनुवाकैः प्रसाद्यन्ते। तेष्वनुवाकेषु सर्वाण्यपि यजूंषि। तान्यपि द्विविधानि। उभयतोनमस्काराणि अन्यतरतोनमस्काराणि च। तत्र त्रिष्वनुवाकेषु नमस्कारादिकं नमस्कारान्तं एकैकं यजुः। इतरेषु पञ्चस्वनुवाकेषु नमस्कारादिकमेवैकैकं यजुः। तत्र द्वितीयेऽनुवाके त्रयोदश यजूंषि ॥

॥ तत्र प्रथमं यजुराह ॥

नमो हिरण्यबाहवे सेनान्ये

दिशां च पतये नमः इति ॥ १ ॥

नमः हिरण्यबाहव इतिहिरण्यऽबाहवे सेनान्यंइतिसेनाऽन्ये दिशां च पतये नमः ॥ १ ॥

वा० भा० हिरण्यनिर्मितान्याभरणानि बाह्वोर्यस्यासौ हिरण्यबाहुः स च संग्रामेषु सेनां नयतीति सेनानीस्तादृशमूर्तिधरो यो रुद्रस्तस्मै नमोऽस्तु । यश्च दिशां पालको रुद्रस्तस्मै नमोऽस्तु ॥ १ ॥

म०भा०भा० नमो हिरण्यबाहवे इत्यस्यानुवाकस्य ऋषिर्मण्डूकः । छन्दो महागायत्री। रुद्रो देवता। तत्र प्रथमेनाऽनुवाकेन भगवन्तं रुद्रं प्रसाद्य तस्योपसंहारकारकाणि च प्रसाद्य तान्यप्युपसंहार्य अत ऊर्ध्व मष्टाभिरनुवाकैस्तं वैश्वरूप्येण स्तुत्वा नमस्कर्तुं प्रारभते । तत्र "त्रिष्वनुवाकेषु नमस्कारादिनमस्कारान्तमेकं यजु"रिति शाकपूणिः । "नमस्काराद्येकं यजुर्नमस्कारान्तमेकं यजुरिति" यास्कः। "अष्टावनुवाकावष्टौ यजूंषी"ति काशकृत्स्नः। तत्र द्वयोर्द्वयोरुद्रयोः स्तुतिनमस्कारौ । अथ "द्विद्विभ्यो जुहोती "ति शतपथब्राह्मणे दर्शनात् । नमस्कारप्रवृत्तिनिमित्तभेदेन एकस्मिन्नपि भेदमारोप्य द्वित्वमुपपाद्यते। बहूनां तु संकीर्त्तने एकमितरस्य विशेषणं वेदितव्यम्। यथा हिरण्यबाहवे सेनान्ये दिशां च पतये नम इति । तेषां च केचिदुभयतो नमस्काराः। केचिदन्यतरतो नमस्काराः। तत्र ब्राह्मणं च भवति "ते हैते घोरतरा रुद्रा उभयतो नमस्काराः । अथैते शान्ततरा येऽन्यतरतो नमस्कारा इति" । पूर्वं ब्रह्मणा सृष्ट्यर्थं प्रार्थितो देव आत्मसधर्मणो रुद्रानसृजत् । अन्यत्रेदमुक्तम् "तुल्यसृष्टिप्रतिषेधाच्चे"ति । तत्र बहुवचनान्तेषु तेभ्यो देवानुचरेभ्यो वा नमस्कारः। एकवचनान्तेषु देवाधिष्ठानशङ्कया सर्वेभ्यः सर्वत्र नमस्काराः क्रियन्ते । अथ पृथग्यजुषां छन्दांसि ब्रूमः । एकाक्षराणां देवी गायत्री । द्व्यक्षराणां देव्युष्णिक् । त्र्यक्षराणां देव्यनुष्टुप् । चतुरक्षराणां दैवी बृहती । पञ्चाक्षराणां देवी पङ्क्तिः । षडक्षराणां देवी त्रिष्टुप् याजुषी वा गायत्री। सप्ताक्षराणां दैवी जगती। याजुषी वोष्णिक्। अष्टाक्षराणां प्राजापत्या गायत्री । याजुषी वाऽनुष्टुप् । नवाक्षराणां याजुषी बृहती । आसुरी वा जगती । दशाक्षराणां याजुषी पङ्क्तिः । आसुरी वा त्रि-

ष्टुप्। एकादशाक्षराणां याजुषी त्रिष्टुप्। आसुरी वा पङ्क्तिः। द्वादशाक्षराणां याजुषी जगती। प्राजापत्यावोष्णिगासुरी वा बृहती साम्नां वा गायत्री। इत्यादि यथाशास्त्रं बोद्धव्यम्। तत्रादौ तव स्वभूतमिदं विश्वं त्वमस्य स्वामीति। न कश्चिदपि स्वामी स्वं हिनस्तीति प्रदर्शयितुं देवस्य विश्वपतित्वं प्रतिपादयति। प्राधान्याच्च प्रथमं द्रव्यविषयमाधिपत्यं प्रतिपाद्यते। नमो हिरण्यबाहवे हिरण्यालङ्कृतबाहवे हिरण्यविकाराः कटकादयो बाह्वोर्यस्य। समुदायविकारषष्ठ्याश्च-बहुव्रीहिर्वाचोत्तरपदलोपश्चेति बहुव्रीहिः। गड्वादित्वात्सप्तम्याः परवचनमाहिताग्न्यादिर्वा द्रष्टव्यः। बाहुग्रहणं चोपलक्षणम्। विविधालङ्कारालङ्कृतसर्वप्रदेशत्वाद्देहस्य हिरण्यसदृशबाहवे वा हिरण्यसदृशसर्वाङ्गायेत्यर्थः। श्रूयते हि "आप्रणखात्सर्वएव सुवर्णस्तस्येति"। स्मर्यतेच "रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं पर"मिति। यद्वा। हितं च रमणीयं च तद्धिरण्यस्य हिरण्यत्वम्। पृषोदरादिः। हृदयरमणीयमिति वा। तादृशबाहवे नमोऽस्त्विति शेषः। सेनान्ये सेनाः संघाताः। यथा देवा मनुष्याः पितरोऽसुरा रक्षांसि पिशाचा यक्षाः किन्नरा विद्याधरेश्वरप्रभृतयश्चेति भोक्तृसंघाताश्चेतनाः प्रकृत्यादिपृथिव्यन्तस्तत्त्वसंघातश्च भोग्योपबन्धनवर्गोऽचेतनः। तासां नेत्रे स्वस्वाधिकारानुरूपेण स्वामित्वेन नियन्त्रे। उदात्तयणो हल्पूर्वादित्यस्य मोङ्धात्वोरिति प्रतिषेधे उदात्तस्वरितयोर्यण इतिविभक्तिः स्वर्यते। पूर्वस्य चेदं विशेषणं विशेष्यं वा। दिशां च पतये नमः। दिशां प्राच्यादीनां पतये पत्ये लोकपालात्मने नमः। षष्ठीयुक्तश्छन्दसिवेति घिसंज्ञा। यद्वा दिशां पतिरादित्यः। दिशां उत्पादकत्वादिति[1]। तथाहि। यत्रोदेति सविता सा प्राची। यत्रदृश्यमानो गच्छति सा दक्षिणा। यत्रास्तमेति सा प्रतीची। यत्र दृश्यमानो गच्छति सोदीची। आहुश्च" सर्वेषामुत्तरो मेरुर्लोकालोकश्च दक्षिण "इति। अथ"यएषो ऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इति। देवसंकीर्तनानन्तरं तदुपासनास्थानभूतस्य सवितुः संकीर्त्तनमिति। यद्वा। दिशो व्यवस्था द्रव्यगुणकर्मादिविषया धर्माधर्मादिविषया दिग्देशकालादिविषयाच तासां पतये प्रवर्तयित्रे। सेनानां च नियन्त्रे। हिरण्यबाहवे नम इति। सावेकाच इति दिक्शब्दस्य विभक्तेरुदात्तत्वम्॥ १॥

॥ द्वितीयं यजुराह ॥

नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः

पशू॒नांपत॑ये॒ नमः॑ इति ॥ २ ॥

---

१ नियामकत्वादिति पाठान्तरम्

नमः वृक्षेभ्यः हरिकेशेभ्य इतिहरिऽकेशेभ्यः पशूनाम् पतये नमः ॥ २ ॥

सा०भा० हरितवर्णाः केशाः पर्णरूपा येषां वृक्षाणां ते हरिकेशाः तादृशेभ्यो वृक्षेभ्यः वृक्षाकाररुद्रमूर्तिभ्यो नमोऽस्तु । यो रुद्रः पशूनां पालकः तस्मै नमोऽस्तु ॥ २॥

भ० भा० भा० नमो वृक्षेभ्य इति । वृक्षरूपेभ्यो रुद्रेभ्यो वृक्षेषु वा तिष्ठद्भ्यः । तात्स्थ्यात्ताच्छब्द्यम् । यथा मञ्चाः क्रोशन्तीति । हरिकेशेभ्यः हरितवर्णानि केशस्थानीयानि पर्णानि येषां तेभ्यः हरितवर्णकेशेभ्यो वा । यद्वा । वृक्षवद्वृक्षाः ब्रह्मादिपिपीलिकान्ताः ब्रह्माण्डक्षितिप्ररूढाः सर्व एव वृक्षाः । वृश्चतेश्छेदनकर्मणः सक्प्रत्यये वृक्षाः । विनाशवन्तइतियावत् । तदात्मभ्यो नमः । हरिकेशेभ्यः हरितवर्णकेशेभ्यः । पशूनां पतये नमः । तेषां पशूनां स्वभूतानां द्विपदां चतुष्पदां च पतये । स्वामित्वे वर्तमानाय नमः । यथा "येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदा" मिति । "ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः" इति तेषां पतित्वात् । "विश्वेशो भवः पशुपतिः स्मृत" इति च पुराणे । सर्वदा यत्पशून् पाति तैश्च यद्रमते पुनः । तेषामधिपतित्वाच्च तस्मात्पशुपतिः स्मृत " इतिमहाभारते । नामन्यतरस्यामिति षष्ठ्याउदात्तत्वम् ॥ २ ॥

॥ तृतीयं यजुराह ॥

नमः सस्पिञ्जराय त्विषीमते
पथीनां पतये नम इति ॥ ३ ॥

नमः सस्पिञ्जराय त्विषीऽमतइतित्विषीऽमते पथीनाम् पतये नमः ॥ ३ ॥

सा० भा० [1]सस्पिशब्दो बालतृणवाची । पीतरक्तः सङ्कीर्णवर्णः पिञ्जरः । बालतृणवत् पिञ्जरः सस्पिञ्जरः । पृषोदरादित्वात् साधुः । सच त्विषीमान् दीप्तिमान् तथाविधरुद्रमूर्तये नमोऽस्तु । पथिनां शास्त्रोक्तदक्षिणोत्तरतृतीयमार्गाणां पतिः पालको यो रुद्रः तस्मै रुद्राय नमोऽस्तु ॥ ३ ॥

भ० भा० भा० नमः सस्पिजराय त्विषीमते । सस्पि बालतृणं तद्वद्रक्तवर्णाय । सस्पितिकाप्रभृतयो यज्ञद्रुहः तेषां जरयिता नाशयिता सस्पिजरः । यज्ञघा-

1 ख० सस्शब्दो बालतृणवाची पिंजरशब्दः पीतरक्तसंकीर्णवर्णे बालतृणवत्सङ्कीर्णवर्णः सस्पिजरः ग० ङ०सस्पिशब्दो बालतृणवाची जरसशब्दः पीतरक्ते बालतृणवत्संङ्कीर्णवर्णः सस्पिजरः

तकरभोजरयित्रे। पिञ्जरं रक्तपीतं शष्पवत् पिञ्जराय। पृषोदरादित्वादिष्टस्वरूपलाभः। त्विषीमते त्विषिर्दीप्तिः अतिशयेन तद्वते तेजिष्ठवपुषे स्वयम्प्रकाशज्ञानरूपाय वा। त्विषेरिगुपधात्कः मतुपि शरादीनां चेति दीर्घत्वं। पथीनां पतये नमः। सन्मार्गाणां लौकिकानां वैदिकानां च प्रवर्तयित्रे। यद्वा। अर्चिरादिमार्गाणां पतये अतिवाहयित्रे। टिलोपाभावश्छान्दसः। यद्वा। पथिमन्तः पथयः द्रष्टारः ब्रह्मादयः तेषां स्वामिने। पथिशब्दान्मत्वर्थीय ईकारः। पूर्ववत्षष्ठ्या उदात्तत्वं। केचिदाहुः। प्साभक्षणे। आदृगमहनेति किप्रत्ययः। सप्सीतिवक्तव्ये वर्णद्वयव्यत्ययेन सस्पीति विक्रियते। भक्षयितारो रक्षःप्रभृतयः सन्मार्गद्वेषिण उच्यन्ते। यथा। "काण्डे काण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसिजिघाꣳसन्ती"ति तेषां जरयिता नाशयिता सस्पिञ्जरः। गमश्चेति चकारात्खच्प्रत्ययः। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्। त्विषीमते महातेजसे नमः। पथीनां पतये तेषां पथां प्रवर्त्तकाय च नमइति॥ ३॥

॥ चतुर्थं यजुराह ॥

नमो॑ बभ्लु॒शाय॑ विव्या॒धिनेऽन्ना॑नां॒

पत॑ये॒ नम॑ इति॥ ४॥

नमः॑ ब॒भ्लु॒शाय॑ वि॒व्या॒धि॒नइति॑वि॒ऽव्या॒धिने॑ अन्ना॑नाम्

पत॑ये नमः॑ ॥ ४॥

सा० भा० बिभर्ति रुद्रमिति भभ्रुर्वृषभः सएव बभ्लुः रलयोर्भेदाऽभावः। तस्मिन् शेते तिष्ठतीति बभ्लुशः स च विद्वेषिणां विशेषेण विध्यतीति विव्याधी तथाविधाय विव्याधिने नमोऽस्तु। यश्चाऽन्नानां पालको रुद्रस्तस्मै नमोऽस्तु॥ ४॥

भ० भा० भा० नमो बभ्लुशाय। बभ्रुः कपिलपिङ्गलः तद्वर्णवते। यद्वा बभ्रुर्वृषभः बिभर्त्तीति। कुभ्रश्चेतिकुप्रत्ययः। तद्वते। लोमादित्वाच्छः। कपिलकादित्वाद्रेफस्य लत्वम्। यद्वा। बभ्लौ वृषभे शेते इति बभ्लुशः तस्मै नमः। विविधं विध्यति बुभुक्षादिरूपेण पीडयतीति विव्याधी तस्मै। ग्रह्यादित्वाण्णिनिः। अन्नानां पतये नमः। अदनीयानामोषधीनां स्वामिने। तत्प्रदानेन जीवानां तर्पयित्रे नमः॥ ४॥

॥ पंचमं यजुराह ॥

नमो॒ हरि॑केशायोपवी॒तिने॑

पु॒ष्टाना॒ं पत॑ये॒ नमः॑ इति॥ ५॥

नमः हरिकेशायेतिहरिं केशाय उपवीतिनइत्युप वीतिने
पुष्टानां पतये नमः ॥ ५ ॥

सा० भा० हरिकेशाय नीलमूर्धजाय[1] पलितरहिताय । उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमोऽस्तु । पुष्टानां परिपूर्णगुणानां पुरुषाणां पतये स्वामिने नमोऽस्तु ॥ ५ ॥

म० भा० भा० नमो हरिकेशाय नीलमूर्द्धजाय नित्यपूने नमः । उपवीतिने यज्ञोपवीतिने । मङ्गलाचारायेत्यर्थः । पुष्टानां पतये नमः । परिपूर्णगुणानां स्वामिने । यद्वा । पुष्टयः पुष्टानि । दश पुष्टयः सन्ति । वाक्पुष्टिर्ज्ञानपुष्टिः शरीरेन्द्रियपुष्टिर्गृहक्षेत्रपुष्टिर्धनधान्यपुष्टिः प्रजापुष्टिः पशुपुष्टिर्ग्रामपुष्टिर्धर्मपुष्टिरणिमादिपुष्टिरिति । तेषां पालयित्रे नमः ॥ ५ ॥

॥ षष्ठं यजुराह ॥

नमो भवस्य हेत्यै
जगतां पतये नमः इति ॥ ६ ॥

नमः भवस्य हेत्यै जगताम् पतये नमः ॥ ६ ॥

सा०भा० भवः संसारः तस्य हेतिरायुधं । संसारच्छेत्रे रुद्राय नमोऽस्तु । जगतांपालको यो रुद्रस्तस्मै नमोऽस्तु ॥ ६ ॥

म० भा० भा० नमो भवस्य हेत्यै । भवः संसारः हेतिरायुधम् संसारस्य छेत्रे । यद्वा । भवस्य या हेतिः संसारनिमित्ता हिंसा तस्यै तदात्मने नमः । उदात्तयणइति विभक्तेरुदात्तत्वम् । हेतिशब्दोऽन्तोदात्तो निपातितः । जगतां पतये नमः । जगतां पृथिव्यादिलोकानां स्वामिने । वर्त्तमानेपृषन्महदिति जगच्छब्दो निपात्यते । तत्र शतृवद्भावादभ्यस्तानामादिरित्याद्युदात्तत्वं । संसारे प्राणिनः खेदयति खिन्नांश्चरक्षतीति समुदायार्थः । केचिदाहुः नमोहिरण्यबाहव इत्यादिभिः पञ्चभिर्मन्त्रैः पञ्च ब्रह्माणि पृथग्वर्णानि प्रतिपाद्य ततः षष्ठेनानेन संसारस्योच्छेत्ता पञ्चवक्रो देवः प्रतिपाद्यत इति ॥ ६ ॥

॥ सप्तमं यजुराह ॥

नमो रुद्रायाऽऽततायिने
क्षेत्राणां पतये नमः इति ॥ ७ ॥

---

[1] ख० ग० ङ० नीलालकमूर्धजाय.

नमः॑ रु॒द्राय॑ आ॒त॒ता॒विन॒इत्या॑ऽ त॒ता॒विने॑ क्षेत्रा॑णां पत॑ये नम॑ः ॥ ७ ॥

सा०भा० आततेन विस्तारितेन धनुषा अवति रक्षति इत्याततावी तस्मै रुद्राय नमोऽस्तु । क्षेत्राणां पालको यो रुद्रस्तस्मै नमोऽस्तु ॥ ७ ॥

भ० भा० भा० नमो रुद्राय व्याख्यातम् । आतताविने आततेन आरोपितज्येन धनुषा जगन्त्यवते तादृशं वा धनुरवते धारयते । अवतेः सुप्यजातौ-णिनिः । तादृशेन वा धनुषा तद्वते । मत्वर्थीयो विनिः । अन्येषामपि दृश्यत इति दीर्घत्वम् । क्षेत्राणां पतये नमः । क्षेत्राणां शरीराणां रक्षकाय स्वामिने वा । तथाहि । "ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये"ति । अविमुक्तादीनां पुण्यक्षेत्राणां वा स्वामिने । पुण्यक्षेत्रपालात्मने वा । संसारस्योच्छेत्रे प्रवर्त्तयित्रे च नम इति भावः ॥ ७ ॥

॥ अष्टमं यजुराह ॥

नमः॑ सू॒ताया॑ऽऽहं॑त्याय॒

वनानां॒ पत॑ये॒ नम॑ः इति ॥ ८ ॥

नमः॑ सू॒ताय॑ अहं॑न्त्याय वना॑नाम् पत॑ये नम॑ः ॥ ८ ॥

सा०भा० सूतः सारथिः तस्मै । अहन्त्याय वैरिभिर्हन्तुं अशक्यस्तादृशाय रुद्राय नमोऽस्तु यो वनानां पालकस्तस्मै रुद्राय नमोऽस्तु ॥ ८ ॥

भ० भा० भा० नमः सूताय । सूतः सारथिः नियन्ता । जगद्यंत्रात्मनो रथस्य नियन्तृत्वेन । यद्वा सूतः पुराणानां वक्ता । तदधिष्ठाने युगादौ । यद्वा सूताय अभिषुतसोमात्मने । छान्दसं दीर्घत्वम् । अहन्त्याय अहंतव्यायात्मज्योतिषे । महाशक्तित्वेन न हन्यतइति । तकारोपजनश्छान्दसः । अव्ययपूर्वपदप्रकृतिस्वरत्त्वम् । यद्वा । नि-हसितोपसर्गः आहन्ति विश्वं । कर्त्तरि कृत्यः । यद्वा । अहमेवसर्वमिति भावोऽहंता तत्र भवः अहन्त्यः । भवेछन्दसीतियत् । यद्वा । अहमिति निपातः । अव्ययात्त्यप् । अहंकारे निरूढः । सर्वत्र छांदसमाद्युदात्तत्वम् । वनानां पतये नमः । विविक्तानामरण्यानां स्मशानानां वा स्वामिने नमः ॥ ८ ॥

॥ नवमं यजुराह ॥

नमो रोहिताय स्थपतये

वृक्षाणां पतये नमः इति ॥ ९ ॥

नमः रोहिताय स्थपतये वृक्षाणाम् पतये नमः ॥ ९ ॥

सा०भा० रोहितो लोहितवर्णः स्थपतिः प्रभुः तस्मै रुद्राय नमोऽस्तु । वृक्षाणां पालकः तस्मै रुद्राय नमोऽस्तु ॥ ९ ॥

भ० भा० भा० नमो रोहिताय लोहितवर्णाय । कश्चिदाह रोशब्दः वाचकरूपः तस्मै हिताय तत्र वा निहिताय । रोहितेविच् । स्थपतये स्थाण्डिकाय । यद्वा । गृहादीनां कर्त्रे । अपरआह स्थाता च सर्वत्र पाता च सर्वस्य । पृषोदरादिः । वृक्षाणां पतये नमः । वृक्षाः प्रसिद्धाः [ *यान् स्थापयति वृश्चति ] ॥ ९ ॥

॥ दशमं यजुराह ॥

नमो मन्त्रिणे वाणिजाय

कक्षाणां पतये नमः इति ॥ १० ॥

नमः मन्त्रिणे वाणिजाय कक्षाणाम् पतये नमः ॥ १० ॥

सा०भा० राजसभायां मन्त्राऽऽलोचनकुशलो मन्त्री स च वणिजां स्वामित्वेन वाणिजः । तस्मै रुद्राय नमोऽस्तु । वनगताः गुल्मादयः कक्षाः तेषां पालकाय ॥ १० ॥

भ०भा०भा० नमो मन्त्रिणे मन्त्राः पञ्च ब्रह्मादयः तद्वते। यद्वा । मन्त्रो गुप्तभाषणं गुप्तं भाषणीया उपनिषदः । तद्वते प्रतिपादकत्वेन । यद्वा । मन्त्रात्मने । सप्तकोटिसंख्यास्तत्वेनास्यसन्तीति । वाणिजाय । वणिगेववाणिजः । प्रज्ञादित्वात्स्वार्थिकोऽण् । वणिग्रूपधारिणइत्यर्थः । स्वेच्छया कदाचित्तथासम्भवात् । यद्वा । तत्सादृश्यात् त्ताच्छब्द्यम् स यथा वणिक् सर्वजनपदव्यवहारविषयं परिच्छिनत्ति एवमयं सर्वजन्तुकर्मसाक्षीति । यद्वा । वणिजि व्यवहर्तरि भवो वाणिजः । यद्वा । वाणी वाक् वाचकादिस्वरूपा तस्यां वाच्यादिस्वरूपेण जातो वाणिजः । छान्दसं ऱ्हस्वत्वम् । कक्षाणां पतये नमः गिरिनदीनदगव्हरगुल्मादयश्चकक्षाः तेषां स्वामिने तत्र स्थितानां जन्तूनां वा रक्षकाय । यद्वा । कक्षाः गहना देशाः भाषागहनाः धर्माधर्मादिगहनाश्च तेषां परिवृढाय ॥ १० ॥

* अत्र द्वयोरप्यादर्शपुस्तकयोरयमेव पाठः । परं तेषां पतये नम इति सुवचम्भाति.

॥ एकादशं यजुराह ॥

नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः इति ॥ ११ ॥

नमः भुवन्तये वारिवस्कृतायेतिवारिवःऽकृताय ओषधीनाम् पतये नमः ॥ ११ ॥

सा० भा० भुवं तनोतीति भुवन्तिः। तस्मै रुद्राय नमोऽस्तु। वरिवो धनं तस्य कर्ता वरिवस्कृत् स एव वारिवस्कृतः तस्मै रुद्राय नमोऽस्तु। ओषधीनां ग्राम्यारण्यानां पालकस्तस्मै रुद्राय नमोऽस्तु ॥ ११ ॥

भ०भा०भा० नमो भुवन्तये। भवति विश्वमस्मिन्नुपादानत्वेन सत्ताप्रधानतया वर्तत इति भुवन्तिः। सर्वदा सर्वत्र भवतीति वा भुवन्तिः। भुवोधिच् बहुलवचनाद्गुणाभावः। यद्वा भुवं तनोतीति भुवन्तिः तृणगुल्मौषधिपादपादीनां भूम्याधारत्वेन विस्तारयितेति। वारिवस्कृताय। वरिवो धनं तस्य कर्ता वरिवस्कृत्। पूर्ववत्स्वार्थिकोऽण् वारिवस्कृतः। यद्वा। वरिवस्कृतां धनमर्जयतां सहायत्वेन सम्बन्धी वारिवस्कृतः। अन्यआह। वरिवः परिचर्या तस्य कर्तारो वरिवस्कृतो भक्ताः तेषामयं वारिवस्कृतः। भक्तवत्सल इति यावत्। वारिणि जले कृतो वासो येन तस्मै वारिवस्कृताय विष्णुरूपाय वरुणरूपाय वा। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। अतःकृकमीत्यादिना सत्वम्। ओषधीनां पतये नमः ग्राम्याणामारण्यानां च पतये सोमात्मने भूतात्मनोत्पादितानां सोमात्मना रक्षकायेति। ओषान्तं पाकान्तं धियन्ते इत्योषधयः। दासीभारादिः ॥ ११ ॥

॥ द्वादशं यजुराह ॥

नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमः इति ॥ १२ ॥

नमः उच्चैर्घोषायेत्युच्चैःऽघोषाय आक्रन्दयतइत्यांक्रन्दयते पत्तीनाम् पतये नमः ॥ १२ ॥

सा०भा० युद्धकाले उच्छ्रितो घोषो ध्वनिर्यस्याऽसावुच्चैर्घोषः तस्मै। आक्रन्दयन् वैरिणां रोदयिता तस्मै रुद्राय नमोऽस्तु। पत्तीनां पादचारिणो योधाः पत्तिशब्दवाच्याः तेषां पालकाय नमोऽस्तु ॥ १२ ॥

म० भा० भा० नम उच्चैर्घोषाय उच्छ्रितशब्दाय। उच्छ्रितस्तोत्राय वा। उच्चैर्घोषा मेघादयः तद्रूपाय। आक्रन्दयते। आक्रन्दनं युद्धे समाव्हानं तस्य कारयित्रे। शत्रूणां वा सर्वतो रोदयित्रे। युद्धेषु जयकारिण इति यावत्। पत्तीनां पतये नमः। "एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते" इति। तासां स्वामिने। यद्वा। पदातीनां पतये पदातिरूपेण त्रीनपि लोकान् स्वयं जेतुं क्षमायेति ॥ १२ ॥

॥ त्रयोदशं यजुराह ॥

नमः कृत्स्नवीताय धावते
सत्वनां पतये नमः इति ॥ १३ ॥

नमः कृत्स्नवीतायेति कृत्स्नऽवीताय धावते सत्वनाम् पतये नमः ॥ १३ ॥

सा० भा० कृत्स्नं सैन्यं वीतं वेष्टितं येनाऽसौ कृत्स्नवीतः तस्मै रुद्राय नमोऽस्तु। धावते पलायमानानां परकीयसैन्यानां पृष्ठतो गच्छन् धावन् तस्मै रुद्राय नमोऽस्तु। सत्वानः सात्विकाः शरणागताः तेषां पालकाय नमोऽस्तु ॥ १३ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥

म० भा० भा० नमः कृत्स्नवीताय। कृत्स्नं शरीरं वीतमाच्छादितं कञ्चुकादिना यस्य। कृत्स्नं वा जगत् वीतं भक्षितं अन्तकाले येन तस्मै। अथर्वशिरश्च भवति "तस्मै उपसंहर्त्रे महाग्रासाय वै नमो नमः" इति कश्चिदाह। कृत्स्नस्य जगतः वीताय वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति एतद्रूपाय। कृत्स्नेन वा जगता गतव्याप्तप्रजातकान्तासितखादितरूपाय। यद्वा। वीते नष्टे जगति कृत्स्नात्मना स्वयमेवावतिष्ठतीति कृत्स्नवीतः। यथा "न सन्न चासच्छिव एव केवलः" इति। पृषोदरादिः। धावते वेगितं गच्छते शीघ्रं वा प्रसीदते। कृत्स्नात्मना स्वयमेवाऽवतिष्ठते। भक्तपातकान् शोधयते वा। सत्वनां पतये नमः। सत्वानो व्याख्याताः ॥

अथैतस्यानुवाकस्य पुरश्चरणम् अर्धकृच्छ्रं चरित्वा अष्टसहस्रं चरुभोजी जपेत् तावच्छम्भोरालयमेकादशप्रदक्षिणाः प्रतिसन्ध्यं कुर्यात्। जपसमाप्तौ देवमाराध्य तत्सन्निधौ ब्राह्मणानेकादश भोजयित्वा कृतपुरश्चरणो भवति। तेन पूर्वं रात्रां वक्ष्यते। शत्रूणां मारणकामो रक्तसर्षपांस्तैलाक्तानयुतं जुहुयाद्धता-

घृतौ तेन कर्मणा शत्रवो नश्यन्ति। सर्षपपिष्टमादाय देवमनुलिप्य शत्रुनामग्रहणपूर्वकं जपेदष्टसहस्रम्। एकादशरात्रेण शत्रूणां राज्ञां महाज्वरो जायते तेनैव ते नश्यन्ति। युद्धे प्रत्यासन्ने देवस्योपरि मांजिष्ठं पटमारोप्य स्वयं शुद्धो भूत्वा दक्षिणहस्ताङ्गुष्ठेन एतद्गच्छत्यनुवाकान्ते वदन्नष्टसहस्रं पञ्च दिनानि जपेत्। शत्रूणां राजा स्थानाद्गच्छति। अथ वशीकर्त्तुकामः पालाशाश्वत्थवैकङ्कतापामार्गाणां मधुघृताक्तानां अयुतं जुहुयात् क्रमशो वर्णचतुष्टयं वशमानयति। राज्यकामो राजा कुमुदसौगन्धिकोत्पलानां मधुयुतमयुतं जुहुयात् राज्यश्रियमुपतिष्ठते। श्रीकामश्चेत्पङ्कजानामयुतं जुहुयात् श्रीमान् भवति। मेधाकामः पलाशपुष्पं कपिलाज्येनाक्तमयुतं जुहुयात् मेधावी भवति। शत्रून्जेतुकामो जपमेकादशसहस्रं कुर्यात् शत्रवो विजिता भवन्ति। प्रतिदिनमष्टोत्तरशतमष्टाविंशतिं वा प्रदक्षिणा नमस्कारांश्च यावज्जीवं कुर्यात्। इह लोके सुखी भूत्वान्ते कैलासमाप्नोति। ध्यानम्। मुक्तालङ्कृतसर्वाङ्गमिन्दुगङ्गाधरं हरम्। ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया॥ १२॥ इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये रुद्रप्रश्ने द्वितीयोऽनुवाकः॥

॥ इति द्वितीयोऽनुवाकः॥

---

सा० भा० द्वितीयानुवाके उभयतो नमस्काराणि कानिचिद्यजूंष्युक्तानि अथाऽपराणि तथाविधान्येव तृतीये द्वादश यजूंष्युच्यन्ते॥

॥ तत्र प्रथमं यजुराह॥

नमः सहमानाय निव्याधिने
आव्याधिनीनां पतये नमः इति॥ १॥

नमः सहमानाय निव्याधिनइति निऽव्याधिने आव्याधिनीनामित्याऽव्याधिनीनाम् पतये नमः॥ १॥

सा० भा० सहमानो विरोधिनोऽभिभवन् तस्मै। नितरां विरोधिनो विध्यतीति निव्याधी तादृशाय। आसमन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनाः तासां पालकाय नमः॥ १॥

भ० भा० भा० नमः सहमानायेत्यस्यानुवाकस्य महादेव ऋषिः। बृहती छन्दः। देवतापि महादेव एव। पूर्वानुवाके द्रव्यविषयं देवस्याधिपत्यं प्रतिपादितम्। अत्र तु क्रियाविषयमाधिपत्यं प्रदर्शयितुमारभते। नमः सहमानाय। सहतिरभि-

भवकर्मा छन्दसि। स्वव्यतिरिक्तं सर्वमभिभवति। अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। अपर आह सहमानाय क्षममाणाय। कृतानप्यपराधान् भक्तानामिति। निव्याधिने नितरां ताडनशीलाय। ग्रह्यादित्वाण्णिनिः। अनपराधानप्यभक्तान्नितरां विध्यत इतिभावः। आव्याधिनीनां पतये नमः। आभिमुख्येन सर्वतो वा ताडयन्तीनां सेनानां पतये स्वामिने नमः। पूर्ववत् णिनिः॥१

## ॥ द्वितीयं यजुराह ॥

नमः ककुभाय निषङ्गिणे स्तेनानां
पतये नमः इति ॥ २ ॥

नमः ककुभाय निषङ्गिणइति निऽसाङ्गिने स्तेनानाम् पतये नमः ॥ २ ॥

सा०भा० ककुभाय ककुभसदृशाय प्रधानभूतायेत्यर्थः। निषङ्गी खड्गहस्तः तस्मै नमः। स्तेना गुप्तचोराः तेषां पालकाय नमः। रुद्रो हि लीलया नट इव तत्तद्वेषं धत्ते। यद्वा। तस्य सर्वजगदात्मकत्वाद्ये यत्र यथा वर्त्तन्ते तत्र तथारूपेण रुद्रः वर्त्तते इति रुद्रस्य सार्वात्म्यं अनुसन्धातुं मन्त्रैरेवमुच्यते। स्तेनादिशरीरेषु रुद्रो द्वेधा वर्त्तते जीवरूपेण ईश्वररूपेण च। तत्र च यज्जीवरूपं तत् स्तेनादिशब्दानां वाच्योऽर्थः। स एव शास्त्रेषु निन्द्यः। यत्तु ईश्वररूपं तत् स्तेनादिशब्दैरुपलक्ष्यते। तदनुसन्धानं तु पापक्षयहेतुत्वेन परमपुरुषार्थ इति लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यंत इति द्रष्टव्यम्। उपलक्षकवाच्यार्थद्वारेण लक्ष्योऽर्थो मुग्धैरपि सहसा सम्यक् बोद्धुं शक्यते। यथा शाखाग्रे चन्द्र इत्यत्र तस्मात् लक्ष्यार्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः॥ २॥

म० भा०भा० नमः ककुभाय प्रधानाय उच्छ्रिताय वा वृषभस्य वा ककुदि भातीति। पृषोदरादिः। निषङ्गिणे खड्गप्रहारकुशलाय। स्तेनानां पतये नमः। स्तेनाश्चोराः प्रच्छन्नवपुषो येऽपहर्त्तारो धनस्य स्तेनचौर्ये पचाद्यच्। स्तेनानामप्याश्रितानामाश्रितवत्सलतया तत्पापनोदनेन स्वामी भूत्वा रक्षणं करोतीति। यद्वा। स्तेयकारिणां परिवृढाय स्तेयकरणे तत्सदृशो नास्तीति॥२॥

---

१ ख० ग० ङ० रुद्रएववर्तते।

॥ तृतीयं यजुराह ॥

नमो निषङ्गिणं इषुधिमते
तस्कराणां पतये नमः इति ॥ ३ ॥

नमः निषङ्गिणइति निऽसङ्गिने इषुधिमतइतीषुधिऽमते तस्कराणाम् पतये नमः ॥ ३ ॥

सा० भा० धनुषि सन्धातुं हस्ते धृतो बाणो निषङ्गः पृष्ठे बद्धो बाणाधार इषुधिः तदुभययुक्ताय नमः । तस्कराः प्रकटचोराः तेषां पालकाय नमः ॥ ३ ॥

भ० भा० भा० नमो निषङ्गिणे भक्तेषु निरन्तरं सक्तिमते । इषुधिमते । निषङ्गेषुधी व्याख्यातौ तद्वते नमः । उभयवत्त्वविधानार्थं पुनर्निषङ्गिग्रहणम् । नितरां वा सङ्गः निषङ्गः तद्वते । चौर्यरुचये इषुधिं च वहते । तस्कराणां पतये नमः । वनादिषु तिष्ठन्तो ये प्रत्यक्षं हरन्ति ते सार्थापहारकादयस्तस्कराः । दिवाविभानिशेतिकरोतेष्टः । तद्बृहतोः करपत्योरितिसकारस्तलोपश्च लघावन्तेद्वयोश्चेति प्रथमस्योदात्तत्वम् ॥ ३ ॥

॥ चतुर्थं यजुराह ॥

नमो वञ्चते परिवञ्चते स्तायूनां
पतये नमः इति ॥ ४ ॥

नमः वञ्चते परिवञ्चतइति परिऽवञ्चते स्तायूनाम् पतये नमः ॥ ४ ॥

सा० भा० स्वामिनः आप्तो भूत्वा तदीयक्रयविक्रयादिव्यवहारेषु यत्र क्वापि यत् किञ्चित् तद्द्रव्यापहारो वञ्चनं सर्वेष्वपि व्यवहारेषु अपह्नवः परिवञ्चनं तदुभयरूपाय नमः । गुप्तचोरा द्विविधाः । दूरादागत्य रात्रावज्ञाताः सन्तः कपाटोद्घाटनेन ये द्रव्यापहर्त्तारस्ते स्तेनाः स्वकीया एव भूत्वा रात्रावह्नि वा अन्यैरज्ञाताः सन्तः अपहर्त्तारो ये ते स्तायवः तेषां स्तायूनां पालकाय नमः ॥ ४ ॥

भ० भा० भा० नमो वञ्चते । वञ्चतिर्गत्यर्थो विप्रलम्भार्थो वा । विप्रलम्भकारिणे नमः । परिवञ्चते । परितः सर्वत्र गच्छते विप्रलम्भं कुर्वन् क्वचिदपि न प्रतिहन्यते तस्मै । स्तायूनां पतये नमः छद्मचारिणो ये वस्त्रादीनपहरन्ति क-

पटसाधुवेषास्ते स्तायवः "उतस्मैनं वस्त्रमथिं न तायु"मित्यादौ दर्शनात् । तत्र वा सकारलोपः अत्र वास कारोपजनः नामन्यतरस्या मिति नाम उदात्तत्वम् । ष्टैवेष्टने । तस्माद्बहुलवचनात्कवापाजिवदुण्प्रत्ययः । तायतेर्वा उणि सकारोपजनः ॥ ४ ॥

॥ पञ्चमं यजुराह ॥

नमो॑ निचे॒रवे॑ परिच॒राया॒ऽरण्या॑नां॒

पत॑ये॒ नमः॑ इति ॥ ५ ॥

नमः॑ नि॒चे॒र॒वइति॑नि॒ऽचे॒रवे॑ प॒रि॒च॒रा॒येति॑परि॒ऽच॒राय॑ अर॑ण्या॒नाम् पत॑ये नमः॑ ॥५॥

सा० भा० स्वामिगृह एव कदापहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः । परितः आपणवीथिप्रवाटिकादावपहारबुद्ध्या चरणशीलः परिचरः । तदुभयरूपाय नमः । मार्गे गन्तॄन् द्रव्यापहारेण बाधितुं निरन्तरमरण्ये वर्त्तमानाश्चोरा अरण्यास्तेषां पालकाय नमोऽस्तु ॥ ८ ॥

भ० भा० भा० नमो निचेरवे । निभृतं नितरां वा चरणशीलाय । उप्रत्यये छान्दसमेत्वम् । परिचराय परितः सर्वतश्चरतीति परिचरः प्रकाशचरः। पचाद्यच् । अरण्यानां पतये नमः तात्स्थ्यात्ताच्छब्द्यं अरण्यवासिनां दस्यूनां पतये अरण्यक्षितां वा स्वामिने ॥ ५ ॥

॥ षष्ठं यजुराह ॥

नमः॑ सृका॒विभ्यो॒ जिघां॑ᳬसद्भ्यो

मुष्ण॒तां पत॑ये॒ नमः॑ इति ॥ ६ ॥

नमः॑ सृ॒का॒विभ्य॒इति॑सृ॒का॒विऽभ्यः॑ जिघां॑ᳬसद्भ्य॒इ॒ति॒जिघां॑ᳬसत्ऽभ्यः॒ मु॒ष्ण॒ताम् पत॑ये नमः॑ ॥ ६ ॥

सा० भा० सृकशब्दो वज्रवाची तेन स्वशरीरं अवन्ति रक्षन्तीति सृकाविनः प्राणिनो हन्तुमिच्छन्तश्चोरा जिघांसन्तः। तदुभयरूपाय नमः । कृषिकाः सन्तः स्वामिधान्यानां अपहर्तारो मुष्णन्तस्तेषां पालकाय नमः ॥ ६ ॥

म०भा०भा० नमः सृकाविभ्यः सृकमिति वज्रनाम तेन चायुधमात्रं लक्ष्यते

तद्वद्भ्यो रुद्रानुचरेभ्यो वा । मत्वर्थीयो विनिः । अन्येषामपि दृश्यत इति दीर्घत्वम् । यद्वा । सृकादीनामायुधानां अवितृभ्यः । सुप्यजाताविति णिनिः । अन्य आह । आयुधविशेषकुशला अस्त्रजीविनो मनुष्यजातिविशेषा एत इति । जिघांऽसद्भ्यः हन्तुमिच्छद्भ्यः मनुष्यविशेषा इत्यन्ये । मुष्णतां पतये नमः धनादीनामपहारो मोषः । मुषस्तेये शतुरनुम इति विभक्तेरुदात्तत्वम् ॥ ६ ॥

॥ सप्तमं यजुराह ॥

नमोऽसिमद्भ्यो नक्तं चरद्भ्यः

प्रकृन्तानां पतये नमः इति ॥ ७ ॥

नमः असिमद्भ्यइत्यसिमत्ऽभ्यः नक्तम् चरद्भ्यइति चरत्ऽभ्यः प्रकृन्तानामितिप्रऽकृन्तानां पतये नमः ॥ ७ ॥

सा० भा० असिमन्तः खड्गधारिणश्चोराः । ये रात्रौ चरन्तो वीथ्यां निर्गताम् प्राणिनो बाधमानाश्चोराः नक्तं चरन्तस्तदुभयरूपाय नमः । हत्वैवापहरन्तः प्रकृन्तास्तेषां पालकाय नमः ॥ ७ ॥

भ० भा०भा०नमोऽसिमद्भ्यः । असिः खड्गः तद्वद्भ्यो रुद्रानुचरेभ्यः । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वम् । नक्तं चरद्भ्यः रात्रौ चरद्भ्यो रुद्रानुचरेभ्यः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वम् । प्रकृन्तानां पतये नमः । प्रकर्षेण छिन्दतां पतये । रात्रौ चरन्तो हत्वैव प्राणिनो धनादिकमपहरन्ति । कृतीछेदने पचाद्यच् । छन्दस्युभयथेति तस्य सार्वधातुकत्वाच्छः ॥ ७ ॥

॥ अष्टमं यजुराह ॥

नम उष्णीषिणे गिरिचराय

कुलुञ्चानां पतये नमः इति ॥ ८ ॥

नमः उष्णीषिणे गिरिचरायेतिगिरिऽचराय कुलुञ्चानाम् पतये नमः ॥ ८ ॥

सा०भा० शिरोवेष्टनवानुष्णीषी यो ग्रामजनवत् उष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्त्तमानश्चोर उष्णीषी गिरौ काष्ठादिसम्पादकानां वस्त्रादिकमपहर्त्तुं चरतीति गिरिचरः तदुभयरूपाय नमः । कुं भूमिं गृहक्षेत्रादिकं लुञ्चन्त्यपहरन्तीति कुलुञ्चाः तेषां पालकाय नमः ॥ ८ ॥

म० भा०भा० नम उष्णीषिणे शिरोवेष्टनवते शिरस्त्राणवते वा । गिरिचराय पर्वतचारिणे । कुलुञ्चानां पतये नमः । कोः पृथिव्या हर्त्तारः कुलुञ्चाः राज्ञां भुवोऽपहारिणः । यद्वा । कुत्सितं लुञ्चन्ति इति कुलुञ्चाः विचित्रव्यसनोत्पादनेन ये धनान्यपहरन्ति । यद्वा । कुलानां लुञ्चकाः कुलुञ्चाः । द्वितीयवर्णलोपः । लुञ्च अपनयने । पचाद्यच् ॥ ८ ॥

॥ नवमं यजुराह ॥

नम इषुमद्भ्यो धन्वाविभ्यश्च
वो नमः इति ॥ ९ ॥

नमः इषुमद्भ्यइतीषुमत्ऽभ्यः धन्वाविभ्यः इति धन्वाविऽभ्यः च वः नमः ॥ ९ ॥

सा०भा० भीषयितुं हस्ते बाणधारिण इषुमन्तः तथा भीषयितुं हस्तेधनुर्धारिणो धन्वाविनः तदुभयरूपाः हे रुद्रा वो युष्मभ्यं नम इति । विशेषणद्वयेन मन्त्रवाक्यं भेत्तुं द्विर्नमस्कारः ॥ ९ ॥

म०भा०भा० नम इषुमद्भ्यः । अतः परं युष्मच्छब्दप्रयोगात्मत्यक्षकृता मन्त्राः संघाताश्च नमस्क्रियन्ते पूर्वत्र हि प्रायेण तत्पतिरेव नमस्कृतः । इषुमद्भ्यः इषुं हस्ते बिभ्रद्भ्यः धन्वाविभ्यश्च वो नमः धनुर्हस्ते आददानेभ्यः । मत्वर्थीयो विनिः । अन्येषामपि दृश्यत इति दीर्घत्वम् । ईदृशेभ्यो युष्मभ्यं नमः ॥ ९ ॥

॥ दशमं यजुराह ॥

नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च
वो नमः इति ॥ १० ॥

नमः आतन्वानेभ्यइत्यांऽतन्वानेभ्यः प्रतिदधानेभ्यइति प्रतिऽदधानेभ्यः च वः नमः ॥ १० ॥

सा०भा० धनुषि ज्यामारोपयन्तः आतन्वानाः तद्रूपेभ्यो वो युष्मभ्यं नमः । धनुषि बाणं सन्दधानाः प्रतिदधानास्तद्रूपेभ्यो वो युष्मभ्यं नमः ॥ १० ॥

म०भा०भा० नम आतन्वानेभ्यः । धनूंष्याततज्यानि कुर्वद्भ्यः प्रतिदधानेभ्यश्च वो नमः आततज्ये धनुषि शरान्संदधानेभ्यश्च । कृदुत्तरपदप्रकृतिस्वरत्वेन अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ १० ॥

॥ एकादशं यजुराह ॥

नम आयच्छद्भ्यो विसृजद्भ्यश्च

वो नमः इति ॥ ११ ॥

नमः आयच्छद्भ्यइत्यायच्छत्ऽभ्यः विसृजद्भ्यइति विसृजत्ऽभ्यः च वः नमः ॥ ११ ॥

सा०भा० ज्याविकर्षणं कुर्वन्तः आयच्छन्तः । बाणं मुञ्चन्तो विसृजन्तः । शेषं सर्वत्र पूर्ववद्व्याख्येयम् ॥ ११ ॥

भ०भा०भा० नम आयच्छद्भ्यः । धनुषि शरान् संधायाकर्षद्भ्यः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वम् । विसृजद्भ्यश्च वो नमः । आरोप्य शरान् मुञ्चद्भ्यः शत्रुदेहं प्रति ॥ ११ ॥

॥ द्वादशं यजुराह ॥

नमोऽस्यद्भ्यो विध्यद्भ्यश्च

वो नमः इति ॥ १२ ॥

नमः अस्यद्भ्य इत्यस्यत्ऽभ्यः विध्यद्भ्यइतिविध्यत्ऽभ्यःच व नमः ॥ १२ ॥

सा० भा० मुक्तस्य बाणस्य लक्ष्यपर्यन्तं गमनमसनं तस्य कर्त्तारोऽस्यन्तः । लक्ष्यसमीपगतस्य बाणस्य लक्ष्ये प्रवेशो वेधस्तस्य कर्तारो विध्यन्तः ॥ १२॥

भ० भा० भा० नमोऽस्यद्भ्यः । असुक्षेपणे । विसृज्य शरान्विक्षिपद्भ्यो रिपुदेहं प्रापयद्भ्यः । विध्यद्भ्यश्च वो नमः शत्रुशरीरं ताडयद्भ्यः ॥ १२ ॥

॥ त्रयोदशं यजुरारभ्य सप्तदशयजुःपर्यन्तानि स्पष्टार्थानि यजूंष्याह ॥

नम आसीनेभ्यः शयानेभ्यश्च

वो नमः ॥ १३ ॥

नमः आसीनेभ्यः शयानेभ्यः च व नमः ॥ १३ ॥

म० भा० भा० नम आसीनेभ्यः शयानेभ्यश्च वो नमः। उभये प्रसिद्धाः। अनुदात्तेत्त्वात् ङित्त्वाच्च लसार्वधातुकानुदात्तत्वम्॥ १३॥

नमः स्वपद्भ्यो जाग्रद्भ्यश्च
वो नमः इति॥ १४॥

नमः स्वपद्भ्य इति स्वपत्ऽभ्यः जाग्रद्भ्य इति जाग्रत्ऽभ्यः च वः नमः॥ १४॥

म० भा० भा० नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः। प्रसिद्धा एव। उक्त एव स्वरः॥ १४॥

नमस्तिष्ठद्भ्यो धावद्भ्यश्च
वो नमः इति॥ १५॥

नमः तिष्ठद्भ्य इति तिष्ठत्ऽभ्यः धावद्भ्य इति धावत्ऽभ्यः च वः नमः॥ १५॥

म० भा० भा० नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वम्॥ १५॥

नमः सभाभ्यः सभापतिभ्यश्च
वो नमः इति॥ १६॥

नमः सभाभ्यः सभापतिभ्य इति सभापतिऽभ्यः च वः नमः॥ १६॥

म० भा० भा० नमः सभाभ्यः संघीभूयासीनेभ्यः। सभापतिभ्यश्च वो नमः। संघातानां स्वामिभ्यः। स्थानपतिभ्यो वा। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वम्॥ १६॥

नमो अश्वेभ्योऽश्वपतिभ्यश्च
वो नमः इति॥ १७॥

नमः अश्वेभ्यः अश्वपतिभ्य इत्यश्वपतिऽभ्यः च वः नमः ॥ १७ ॥

इति सायणाचार्यविरचिते रुद्रभाष्ये तृतीयोऽनुवाकः ॥३॥

भ० भा० भा० नमो अश्वेभ्यः अश्वविग्रहेभ्यः। केचिदाहुः। न विद्यते स्वं धनं येषां ते अस्वाः अश्वाः* तेभ्यः। निष्परिग्रहेभ्य इति यावत्। अश्वपतिभ्यश्च वो नमः। अश्वाध्यक्षात्मभ्यः। महाश्रीमद्भ्यो वा। पूर्ववत्स्वरः। सर्वे वै ते देवस्यानुचराः देवस्यैव वा लीलाविग्रहविशेषाः ॥ १७ ॥

अथैतस्यानुवाकस्य पुरश्चरणम्। कृच्छ्रं चरित्वा पञ्चसहस्रजपात् कृतपुरश्चरणो भवति। जनपदव्याधिषु सत्सु राजा शान्तिं कारयेत्। सिद्धैर्ब्राह्मणैरेकादशभिरीश्वरालये जपः कार्यः। पञ्चभिर्जपः। पञ्चभिर्होमः। एको ब्राह्मणः तिलौदनं प्रतिनमस्कारं जुहुयात्। शतसहस्रं जपः। एवं कृते जनपदव्याधिर्नश्यति। वाहनानां रोगे तिलपिष्टमिश्रापूपैराहुतिमात्रैरेकादशसहस्रहोमाद्वाहनानां सामान्यव्याधिर्नश्यति। अन्यव्याधौ वाहनावासे अपामार्गतण्डुलैराज्यमिश्रैरष्टसहस्रं जुहुयात्। तेषां व्याधिर्नश्यति। प्रधानव्याधौ शुद्धतण्डुलैराज्यसिक्तैः शम्भोरालये शतसहस्रं जुहुयात्। अमात्यानां रोगेऽपि दूर्वापामार्गैः प्रत्येकमष्टसहस्रं जुहुयात्। तेषां व्याधिर्नश्यति। राजव्याधावुच्यते। सिद्धैर्ब्राह्मणैरेकविंशत्या कार्यम्। तेषामेको ब्रह्मा। राजप्रमाणं सर्वतोऽग्निकुण्डं कृत्वा। तत्र मथिताग्निमाधाय द्वन्द्वं भूत्वा जुहुयुः। तण्डुलतिलश्यामाकनीवारापामार्गदूर्वाकमलकिञ्जल्कशुद्धौदनाज्यानि होमद्रव्याणि सर्वं च गव्याज्यमिश्रं च भवति। तस्मादग्निकुण्डाद्दक्षिणपश्चिमतः कलशं जलपूर्णं स्पृष्ट्वा ब्रह्मा जपेत्। आहुतिरपि सप्तनाडिकान्ता निरन्तरम्। एवममावास्याप्रभृत्यमावास्यान्तं होमः। अथ राजरोग उदीर्णश्चेदुदयात्प्रभृत्यास्तमयाद्धोमः। नाडिकाहोमस्य दक्षिणा प्रतिदिनं प्रतिपुरुषं अर्धनिष्कः। दिवा होमे तद्द्विगुणम्। आचार्यस्य तद्द्विगुणम्। कलशजलेन प्रोक्षणं राजोपभोग्यद्रव्येषु कर्तव्यम्। एवं कृते राजरोगो विनश्यति। अन्यदप्युच्यते। राजरोगविनाशार्थं नित्यवदनेनानुवाकेन शुक्लतण्डुलैराज्यतिलमिश्रितैरष्टसहस्रमाहुतयो होतव्याः। अनेन राजा नित्यं नीरोगो भवति दीर्घायुश्च भवति। अन्येषामपि रोगे सति अनेनानुवाकेन प्रतिनमस्कारं तिलव्रीहियवैराज्याक्तैर्मधुसिक्तैरष्टसहस्रं जुहुयात् तेषां व्याधिर्नश्यति। अने-

* सशयोरभेदं पठन्ति केचित्. न विद्यते श्वस्तनं धनं येषां ते इत्यपि भाष्यपाठः।

मानुवाकेनाभिचारा उच्यन्ते । राजा चान्यतरस्य राष्ट्रस्य रोगबाहुल्यमिच्छन् नाम्नैव वाराहादिभिर्मांसैर्लक्षं होमः कार्यः । रिपुराष्ट्रं समुद्दिश्याभिचारं करोमि फट्स्वाहेति । एवं मांसहोमेन रिपुराष्ट्रं प्रजाश्च शुष्यन्ति । अथ वैकङ्कतसमिद्भी रक्तसूत्रवेष्टिताभिः शतसहस्रं होमः । अनेन शत्रोः महाज्वरो भवति । परराष्ट्रजनैरुपभोग्यं जलादिकं वस्तु स्पृष्ट्वा वीक्ष्य वा शतसहस्रं जपं कुर्यात् । यस्तद्वस्तूपयुङ्क्ते स संवत्सरान्नश्यति । श्मशानाग्नावर्कसमिद्भिः शतसंवत्सरं जुहुयात् । तेन शत्रुराजनगरं व्याधिना नश्यति । अर्कारण्यं भवति । अनेनैव चामुण्डालये दक्षिणाभिमुखो भूत्वा माषतिलैस्तैलाक्तैरेकादशसहस्रं जुहुयात् । परराष्ट्रप्रजा च मसूरिकाभिर्बाध्यते । अनेनैवापरमुच्यते । पश्चिमद्वारे शम्भोरालये देवस्य पादपीठे अग्निमपस्मारिणं स्पृष्ट्वा सप्तसहस्रं जपेत् । शत्रुराज्यं स्मृत्वा मन्त्रान्ते'प्रज्वल ज्वालापस्मारिन्निति' वदेत् । एतेन राजशत्रुरपस्मारी भवति । अनेनैव सर्वपदगं राजानं स्मृत्वा शुद्धतण्डुलकृतपिष्टैराहुतिमात्रैः शतसहस्रहोमेन राजयक्ष्मोत्पद्यते । तेनैव नश्यति । अथध्यानम् । रूपयौवनसम्पन्ना मूर्त्तैव वनदेवता । पुष्पिताशोकपुन्नागसहकारशिशूपमः । पञ्चविंशतिनक्षत्रो मायूरकृतशेखरः । अकलङ्कशरच्चन्द्रपूर्णबिम्बसमाननः । प्रान्ते बद्धकपर्दान्तो वसानश्चर्म कोमलम् । सव्यापसव्यविधृतकृतमालाविभूषितः । धाराकदम्बपुञ्जेन नाभिदेशप्रलम्बिना । आजङ्घप्रेक्षणीयेन प्रेक्षणीयोऽपि शत्रुभिः । भार्यास्य चारुसर्वाङ्गी वन्यालङ्कारभूषिता । आदर्शमूर्तिः शोभानां वन्यानामिव निर्मला । तस्या हस्ते धनुर्दत्वा शरमेकं च निर्मलम् । द्वितीयमंसमालम्ब्य शिष्टं वामेन बाहुना सुगन्धिपुष्पस्तबकमाघ्रायाघ्राय पाणिना । वीज्यमानो मन्दमन्दं नवपल्लवशाखया । समावृतो बालकैश्च श्वभिश्चापि मनोहरैः । गच्छद्भिरग्रतो ह्येतैर्ध्यातव्यो जगतां गुरुः । एवंभूतो महातेजाः किरातवपुरीश्वरः ॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने नमके तृतीयोऽनुवाकः ॥ ३ ॥

॥ इति तृतीयानुवाकः ॥

---

तृतीयानुवाके यान्युभयतो नमस्काराणि यजूंषि उक्तानि तेभ्योऽन्यानि कानिचित् उभयतो नमस्काराणि यजूंषि चतुर्थेऽभिधीयन्ते तत्र

---

१ भिक्षुभिश्चेति पाठान्तरम् ।

॥ प्रथमं यजुराह ॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च

वो नमः इति ॥ १॥

नमः आव्याधिनीभ्य इत्याऽव्याधिनीभ्यः विविध्यन्तीभ्य

इति विऽविध्यन्तीभ्यः च वः नमः॥ १ ॥

सा० भा० आसमन्तात् वेद्धुं शक्ताः स्त्रीमूर्तयः आव्याधिन्यः विशेषेण वेद्धुं शक्ताः विविध्यन्त्यस्ताभ्यो नमः ॥ १ ॥

भ० भा० भा०नम आव्याधिनीभ्य इत्यस्यानुवाकस्य दुर्वासा ऋषिः । उष्णिक् छन्दः । शम्भुर्देवता । अतः परं क्रियागुणद्रव्यविषयमाधिपत्यं द्रष्टव्यम् । अस्मिन्ननुवाके सर्वे मन्त्राः प्रत्यक्षकृताः । संघाता एव च नमस्क्रियन्ते । नम आव्याधिनीभ्यः । आविध्यन्ति सर्वतस्ताडयन्ति इत्याव्याधिन्यो रुद्रसेना जातिविशेषाश्च । पूर्ववत् णिनिः स्वरश्च । विविध्यन्तीभ्यश्च वो नमः । विविधं बहुप्रकारं ताडयन्तीभ्यः ॥ १ ॥

॥ द्वितीयं यजुराह ॥

नम उगणाभ्यस्तृंहतीभ्यश्च

वो नमः इति ॥ २ ॥

नमः उगणाभ्यः तृंहतीभ्यः च वः नमः ॥ २ ॥

सा० भा० उत्कृष्टगणरूपाः सप्तमातृकाद्याः स्त्रियः उगणाः । हिंसितुं समर्थाः दुर्गाद्या उग्रदेवतास्तृंहत्यः ताभ्यो नमः ॥ २ ॥

भ०भा०भा० उगणाभ्यः। उत्कृष्टगणाभ्यः उद्गीर्णगणाभ्यो वा । उदोऽन्त्यलोपश्छान्दसः। "पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् । सेनामुखं गुल्मगणौ" इति गणलक्षणम् । पत्तिरुक्ता । तृंहतीभ्यश्च वो नमः । हिंसाविशेषानुत्पादयन्तीभ्यः । तृहू हिंसायां रौधादिकः शतुरनुम इति नद्या उदात्तत्वम्॥२॥

॥ तृतीयं यजुराह ॥

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च

वो नमः इति ॥ ३ ॥

नमः॑ गृत्सेभ्य॒ः गृत्सप॑तिभ्य॒ इति॑ गृत्सप॑तिऽभ्यः॒ च॒ व॒ः नमः॑ ॥ ३ ॥

सा० भा० गर्धनशीला गृत्साः विषयलम्पटा इत्यर्थः तेषां पालकाः गृत्सपतयस्तेभ्योनमः ॥ ३ ॥

म० भा० भा०नमो गृत्सेभ्यः मेधाविभ्यः । ये बुद्धिमत्तया जीवन्ति ते गृत्साः । गृत्सपतिभ्यश्च वो नमः । ये बुद्धिमत्तया गृत्सन्ति जीवन्ति तेषां पतिभ्यः स्वामिभ्यः । पत्युत्तरलक्षणं पूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

॥ चतुर्थं यजुराह ॥

नमो॒ व्राते॑भ्यो॒ व्रात॑पतिभ्यश्च

वो॒ नम॑ः इति ॥ ४ ॥

नमः॑ व्राते॑भ्यः व्रात॑पतिभ्य इ॒ति व्रात॑पतिऽभ्यः॒ च॒ व॒ः नमः॑ ॥ ४ ॥

सा०भा० नानाजातीनां संघा व्राताः तेषां पालका व्रातपतयः तेभ्यो नमः ॥ ४ ॥

म० भा० भा० नमो व्रातेभ्यः । नानाजातीया अनियतवृत्तयः उत्सेधजीविनां संघाः व्राताः तेभ्यः । व्रातपतिभ्यश्च वो नमः । तेषां व्रातानां पालयितृभ्यश्च ॥ ४ ॥

॥ पञ्चमं यजुराह ॥

नमो॑ ग॒णेभ्यो॑ ग॒णप॑तिभ्यश्च

वो॒ नम॑ः इति ॥ ५ ॥

नमः॑ ग॒णेभ्य॑ः ग॒णप॑तिभ्य इति॑ ग॒णप॑तिऽभ्यः॒ च॒ व॒ःनमः॑ ॥५

सा० भा० देवस्यानुचरा भूतविशेषा गणास्तेषां पालका गणपतयस्तेभ्यो नमः ॥ ५ ॥

म० भा० भा० नमो गणेभ्यः । प्रमथादिदेवानुचरेभ्यो भूतगणेभ्यः । गणपतिभ्यश्च वो नमः । तेषां गणानां पालयितृभ्यश्च ॥ ५ ॥

॥ षष्ठं यजुराह ॥

नमो विरूपेभ्यो विश्वरूपेभ्यश्च

वो नमः इति ॥ ६ ॥

नमः विरूपेभ्य इति विऽरूपेभ्यः विश्वरूपेभ्य इति विश्वऽरूपेभ्यः च वः नमः ॥ ६ ॥

सा० भा० विरूपा विकृतरूपा नग्नमुण्डादयः। विश्वरूपाः तुरङ्गगजवक्त्रादिनानाविधरूपधारिणो भृत्यास्तेभ्यो नमः ॥ ६ ॥

भ० भा० भा० नमो विरूपेभ्यः। विकृतरूपेभ्यः। नग्नमुण्डादिभ्यः। हीनातिरिक्ताङ्गेभ्यो वा। विश्वरूपेभ्यश्च वो नमः। स्वेच्छया गज-सिंह-व्याघ्रादि-नानारूपधारिभ्यः। बहुव्रीहौ विश्वं संज्ञायामिति विश्वशब्दोऽन्तोदात्तः ॥ ६ ॥

॥ सप्तमं यजुराह ॥

नमो महद्भ्यः क्षुल्लकेभ्यश्च

वो नमः इति ॥ ७ ॥

नमः महद्भ्य इति महत्ऽभ्यः क्षुल्लकेभ्यः च वः नमः ॥७॥

सा० भा० अणिमाद्यैश्वर्योपेता महान्तः। तद्रहिताः क्षुल्लकाः ॥ ७ ॥

भ० भा० भा० नमो महद्भ्यः। ज्ञानाकारप्रभावैर्बृहद्भ्यः। यानधिकृत्येदं भवति। "सार्केन्दुग्रहनक्षत्रां द्यां कुर्युर्ये महीतले। प्राप्याष्टगुणमैश्वर्यं ये न यान्ति सुविस्मयम्। येषां विस्मयते नित्यं कर्मभिर्भगवांश्छिवः" इति। क्षुल्लकेभ्यश्च वो नमः क्षुद्रज्ञानाकारप्रभावेभ्यः। यद्वा क्षोदयित्वा लोलयित्वा कदनं कृत्वा वर्त्तमानेभ्यः। अन्येऽप्याहुः क्षुधं क्षोदं वा क्रान्तीति क्षुल्लाः। ततः प्रागिवीयः क इति ॥ ७ ॥

॥ अष्टमं यजुराह ॥

नमो रथिभ्योऽरथेभ्य

श्च वो नमः इति ॥ ८ ॥

नमः रथिभ्य इति रथिऽभ्यः अरथेभ्यः च वः नमः ॥८॥

सा० भा० रथमारूढा रथिनस्तद्रहिता अरथास्तेभ्यो नमः ॥ ८ ॥

म० भा० भा० नमो रथिभ्यः रथवद्भ्यः रथारूढेभ्यः । अरथेभ्यश्च वो नमः तद्विपरीतेभ्यः पदातिभ्यः । नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ८ ॥

नवममारभ्य सप्तदशपर्यन्तानि स्पष्टार्थानि यजूंष्याह ।

॥ नवमं यजुराह ॥

नमो रथेभ्यो रथपतिभ्यश्च

वो नमः इति ॥ ९ ॥

नमः रथेभ्यः रथपतिभ्य इति रथपतिऽभ्यः च वः नमः॥९

म० भा० भा० नमो रथेभ्यः रथरूपेभ्यः रथावयवभूतेभ्यो वा । यथाह महाभारते " हयांश्च चतुरो वेदान्सर्वदेवमयं रथम् " इति । भविष्यत्पुराणे च "अर्काब्जनेमिर्वेदाश्वस्त्रयस्त्रिंशन्मरुन्मयः । पुरारेः कल्पितो देवैः स रथो ब्रह्मसारथिः " इति । रथपतिभ्यश्च वो नमः । रथस्वामिभ्यः ॥ ९ ॥

॥ दशमं यजुराह ॥

नमः सेनाभ्यः सेनानिभ्यश्च

वो नमः इति ॥ १० ॥

नमः सेनाभ्यः सेनानिभ्य इति सेनानिऽभ्यः च वः नमः ॥ १० ॥

म० भा० भा० सेनाभ्यः सेना भूत्वा क्रीडद्भ्यः । सेनानिभ्यश्च वो नमः । सेनानेतृभ्यः । छान्दसो ह्रस्वः ॥ १० ॥

॥ एकादशं यजुराह ॥

नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च

वो नमः इति॥ ११ ॥

नमः क्षत्तृभ्य इति क्षत्तृऽभ्यः संग्रहीतृभ्य इति संग्रहीतृऽभ्य च वः नमः ॥ ११ ॥

भ० भा० भा० नमः क्षत्तृभ्यः रथानां शिक्षयितृभ्यः । संग्रहीतृभ्यश्च वो नमः सारथिभ्यः । ये रश्मीन् संगृह्णन्ति ॥ ११ ॥

॥ द्वादशं यजुराह ॥

नम स्तक्षभ्यो रथकारेभ्यश्च

वो नमः इति ॥ १२ ॥

नमः तक्षभ्य इति तक्षऽभ्यः रथकारेभ्य इति रथऽकारेभ्यः च वः नमः ॥ १२ ॥

भ० भा० भा० नमस्तक्षभ्यः वर्द्धकिभ्यः । सर्वे चैते शिल्पिनो जातिविशेषाः । देवाधिष्ठानशङ्कया नमस्क्रियन्ते । रथकारेभ्यश्च वो नमः । साधुरथकर्तृभ्यः॥१२॥

॥ त्रयोदशं यजुराह ॥

नमः कुलालेभ्यः कर्मारेभ्यश्च

वो नमं इति ॥ १३ ॥

नमः कुलालेभ्यः कर्मारेभ्यः च वः नमः ॥ १३ ॥

भ० भा० भा० नमः कुलालेभ्यः । कुम्भकारेभ्यः । ते हि कुं मृदं लालयन्ते । लल ईप्सायां । कर्मारेभ्यश्च वो नमः । लोहकारेभ्यः । तेषां हि अरं अलं पर्याप्तं कर्म भवतीति कर्माराः ॥ १३ ॥

॥ चतुर्दशं यजुराह ॥

नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च

वो नमः इति ॥ १४ ॥

नमः पुञ्जिष्टेभ्यः निषादेभ्यः च वः नमः ॥ १४ ॥

सा० भा० पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः । मत्स्यघातिनो निषादाः तेभ्यो नमः ॥ १४ ॥

भ० भा० भा० नमः पुञ्जिष्टेभ्यः । पक्षिणां बन्धकेभ्यः । ते हि पुञ्जिनां संघवतां वयसां वेष्टयितारः । ष्टै वेष्टने । निषादेभ्यश्च वो नमः । मत्स्यघातिनो निषादाः ते हि नितरां सादयितारः । संघशो जन्तून्मारयितुकामत्वात् ॥१४॥

॥ पञ्चदशं यजुराह ॥

नम॑ इषुकृद्भ्यो॑ धन्वकृद्भ्य॑श्च

वो॒ नमः॑ इति ॥ १५ ॥

नमः॑ इ॒षु॒कृद्भ्य॒ इतीषु॑कृत्ऽभ्य॒ः ध॒न्व॒कृद्भ्य॒ इति॑ धन्व॒कृ-त्ऽभ्य॒ः च॒ व॒ः नमः॑ ॥ १५ ॥

भ० भा० भा० नम इषुकृद्भ्यः । साधुशरकृद्भ्यः । धन्वकृद्भ्यश्च वो नमः । साधुचापकर्तृभ्यः ॥ १५ ॥

॥ षोडशं यजुराह ॥

नमो॑ मृग॒युभ्य॑ः श्व॒निभ्य॑श्च

वो॒ नमः॑ इति ॥ १६ ॥

नमः॑ मृ॒ग॒यु॒भ्य॒ इति॑ मृ॒गयु॑ऽभ्य॒ः श्व॒निभ्य॒ इति॑ श्व॒नि॑ऽभ्य॒ः च॒ व॒ः नमः॑ ॥ १६ ॥

सा० भा० शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः ॥ १६ ॥

भ० भा० भा० नमो मृगयुभ्यः । मृगव्याधेभ्यः । ते हि मृगान्यान्ति सातत्येन जिघांसया । मृगय्वादयश्चेति यातेः कुप्रत्ययः । यद्वा । मृगमात्मन इच्छन्तीति सुप आत्मनः क्यच् । क्याच्छन्दसीत्युप्रत्ययः । न च्छन्दस्यपुत्रस्येतीत्वाभावः । श्वनिभ्यश्च वो नमः । शुनां नेतृभ्यः । पालयन्ति ये शुनः । श्वागणिकाः । छान्दसं ह्रस्वत्वम् ॥ १६ ॥

॥ सप्तदशं यजुराह ॥

नम॒ श्वभ्य॒ः श्वप॑तिभ्यश्च

वो॒ नमः॑ इति ॥ १७ ॥

नमः॑ श्वभ्य॒ इति॒ श्वऽभ्य॒ः श्वप॑तिभ्य॒ इति॒ श्वप॑तिऽभ्य॒ः च॒ व॒ः नमः॑ ॥ १७ ॥

अत्र द्वितीयानुवाको लीलार्थदेवतामूर्तिप्राधान्येन स्तोतुं प्रवृत्तः। तृतीयानुवाकश्चोरमूर्तिप्राधान्येन स्तोतुं प्रवृत्तः। चतुर्थो नानाजातिमूर्तिप्राधान्येनेति विभागो द्रष्टव्यः॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये चतुर्थोऽनुवाकः॥ ४॥

भ० भा० भा० नमः श्वभ्यः श्वरूपधारिभ्यः। सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य नगोश्वन्निति प्रतिषेधः। श्वपतिभ्यश्च वो नमः। शुनां स्वामिभ्यः। क्षेत्रपालरूपेभ्यो वा। पत्युत्तरपदलक्षणं पूर्वपदप्रकृतिस्वरत्वम्। एवं रूपेभ्यो युष्मभ्यं नमः। केचिदाहुः। सर्वेऽपि चैते विविधाराधनसंप्रणीतपरमेश्वरप्रसादभाजो जातिविशेषा एव नमस्क्रियन्त इति॥ १७॥

अथास्यानुवाकस्य पुरश्चरणम्। कृच्छ्रं द्वादशरात्रं तदर्धं च कृत्वा नवसहस्रं जपेत्। ततः शिवालयेऽष्टसहस्रं प्रदक्षिणं कुर्याद्यावत्प्रदक्षिणासमाप्तिस्तावन्निरन्तरं जपेत्। तदा कृतपुरश्चरणो भवति। अत्र दिनादयो न प्रेक्षितव्याः। यदा रुचिस्तदा कर्त्तव्यम्। राजयक्ष्मावृतो मर्त्यः सिद्धं द्विजं वृत्वा शान्तिं कुर्यात्। ततो वृतो विप्रः कारयितुरग्नौ तद्गृहैकदेशे कुण्डं बाहुमात्रं विधाय तस्य पुरो वेदिं कृत्वा तत्र नवं घटं जलपूर्णं तन्तुवेष्टितं निधाय देवमनेनानुवाकेनावाह्य गन्धादिभिरभ्यर्च्य गन्धं कर्पूरं पुष्पं तामरसं धूपं उशीराक्तिदशाङ्गं दीपं सर्पिषा समर्प्य एवमाराध्यात्मानमपि तत्त्वमाराध्यैकादश दिनानि दीक्षित्वा कुर्यात्। प्रारम्भदिने मन्त्रपुष्पान्तं कृत्वा अनुवाकेनैकादशकृत्वः प्रतिनमस्कारमाज्येन हुत्वा तत्सन्निधावेकविंशतिसहस्रं जपेत्। तदा तत्प्रभृति यावदन्तमग्निः संरक्ष्यः ततोऽपि परश्वः नित्यकार्यं कृत्वा तिललाजदूर्वाव्रीहियवैराज्यमधुसिक्तैरेकादशकृत्वोऽनुवाकेन होमः। एवं त्रीणि दिनानि प्रतिदिनं मधुसर्पिषा जुहुयात्। ततो द्वे दिने सप्तमाष्टमे अश्वत्थापामार्गहोमः पूर्ववत्। तत एकदिनमुदयात्प्रभृति आस्तमयमावश्यकनित्याविरोधेन निरन्तरमनुवाकं जपेत्। ततो नवमे मधुसर्पिषा होमः। दशमे उदयास्तमयं जपेत्। ततः समाप्तिदिने अनेनानुवाकेनाष्टसहस्रकमलपुष्पैः प्रतिनमस्कारं देवमाराधयेत्। ततो गौरीमाराध्य ब्राह्मणैर्व्याधिनिर्मोचनमस्त्वितिवाच्यम्। दानकालेऽष्टसहस्रं तदर्धमष्टशतं वा राज्ञः। इतरेषामष्टशतं तदर्धं पञ्चविंशतिनिष्कं वा। एवमेकस्य पृथग्दानम्। ततः कर्मदक्षिणा दातव्या। प्रतिदिनमेकनिष्कम्। ततोऽपि सर्वदक्षिणेति धेनुर्देया। एवं समाप्य देवं विसर्जयेत्। देवालयादिकर्तुरेवम्। ततो घटजलेन तं स्नापयेत् प्रोक्षयेद्वा। एतेन राजयक्ष्मा नश्यति। शम्भुप्रसादादेव दीर्घायुर्भवति। अनेनैवानुवाकेन मेहशान्तिरुच्यते। मेहवान् स्वाग्नौ मधुसर्पिषा

प्रतिनमस्कारं नवसहस्रमाहुतीर्जुहुयात् मेहो नश्यति । अन्येषामपि कुष्ठादीनां शतसहस्रमनुवाकं जपेत् । व्याधयो नश्यन्ति । ज्वरादिसन्निपाते शक्तो ब्राह्मणो नाभिमात्रे जले स्रोतसि स्थित्वा रक्तकमलमष्टसहस्रं प्रतिनमस्कारं क्षिपेत्। शेषेण भृङ्गिरिटिपूजा कर्त्तव्या । एवं कृते महाज्वरो नश्यति । पूर्वमनेन राजयक्ष्मणो निर्हरणमुक्तम् । घोरत्वाद्ब्राह्मणो विद्वानेव गुरुर्भवेदन्यथा कलहक्रिया भवति । तस्मादलोपः कार्यः । ततो ध्यानम् । भस्मोद्भासितसर्वाङ्गजटामण्डलमण्डितम् । ध्यायेत्र्यक्षं वृषारूढं गणेश्वरयुतं हरम् ॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने चतुर्थोऽनुवाकः॥४॥

॥ इति चतुर्थोऽनुवाकः ॥

---

चतुर्थेऽनुवाके उभयतो नमस्काराणि यजूंषि समापितानि । अथ पञ्चममारभ्य नवमान्तेष्वनुवाकेषु नमस्कारोपक्रमाण्येव यजूंष्याम्नायन्ते ॥

## ॥ तत्र पञ्चमानुवाके प्रथमं यजुरारभ्य पञ्चदश यजूंष्याह ॥

नमो भवाय च रुद्राय च इति ॥ १ ॥

नमः भवाय च रुद्राय च ॥ १ ॥

सा० भा० भवन्ति प्राणिनोऽस्मादिति भवः । रुत् रोदनहेतुभूतं दुःखं द्रावयतीति रुद्रः ॥ १ ॥

भ० भा० भा० नमो भवाय च नमो ज्येष्ठाय चेत्यनुवाकयोर्ऋषिर्देवता च भगवांच्छम्भुरेव । छन्दो महाविराट् । एवं त्रिभिरनुवाकैर्देवस्य विश्वाधिपत्यं प्रतिपादितम् । अतः परमष्टमूर्त्यधिष्ठानभेदेन च देवः स्तूयते । गता उभयतो नमस्काराः । अतःपरमन्यतरतो नमस्काराः । तत्रापि पुरस्तान्नमस्काराः । नमो भवाय च रुद्राय च । भवत्यसौ सर्वत्र सर्वदेति भवः।पचाद्यच् । भवत्येव न कदाचिदपि न भवतीति । भावयति सर्वं भाव्यते सर्वैरिति वा । बहुलं संज्ञाछन्दसोरिति णिलुक् । भवत्यस्मिन्सर्वमिति वा । व्यत्ययेन ऋदोरप् । उञ्छादिर्द्रष्टव्यः । अयं चाष्टमूर्तिष्वपामधिष्ठाता। रुद्राय व्याख्यातम् ।अयं सूर्यस्याधिष्ठाता । अत एवाधिष्ठातृप्रकरणे पुनराम्नायते ॥ १॥

नमः शर्वाय च पशुपतये च इति ॥ २ ॥

नमः शर्वाय च पशुपतय इति पशुऽपतये च ॥ २ ॥

सा० भा० शृणाति हिनस्ति पापमिति शर्वः। पशुसमानानज्ञानिनः पुरुषान् पालयतीति पशुपतिः ॥ २ ॥

भ० भा० भा० नमः शर्वाय च। शृणाति हिनस्ति सर्वमन्तकाले इति शर्वः। शॄहिंसायाम्। कॄमृदृशॄभ्यो वः। अयमग्नेरधिष्ठाता। पशुपतये च। पशूनां पालयित्रे। पुनराम्नातं पूर्ववत्। अयं हि भूमेरधिष्ठाता। पातेर्डतिः। परादिश्छन्दसि बहुलम् ॥ २ ॥

नमो नीलग्रीवाय च शितिकण्ठाय च इति ॥ ३ ॥

नमः नीलग्रीवायेति नीलऽग्रीवाय च शितिकण्ठायेति शितिऽकण्ठाय च ॥ ३ ॥

सा० भा० कालकूटधारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः शितिः श्वेतवर्णोऽवशिष्टः कण्ठप्रदेशो यस्यासौ शितिकण्ठः ॥ ३ ॥

भ० भा० भा० नमो नीलग्रीवाय च। व्याख्यातम्। शितिकण्ठाय च। "शिती धवलमेचकौ" इति निघण्टुदर्शनात्। सहस्रतमो हि भागो भगवतः कण्ठस्य कालकूटविषानलेन नीलिमानमगात्। यद्वा। आदरार्थं पुनर्वचनम्। यथाम्बिकापतये उमापतये पशुपतये नमो नम इति। शितेर्नित्याबह्वजिति उत्तरपदप्रकृतिस्वरत्वम् स्वाङ्गशिटामदन्तानामिति कण्ठशब्द आद्युदात्तः ॥ ३ ॥

नमः कपर्दिने च व्युप्तकेशाय च इति ॥ ४ ॥

नमः कपर्दिने च व्युप्तकेशायेति व्युप्तऽकेशाय च ॥४॥

सा० भा० कपर्दो जटाजूटोऽस्यास्तीति कपर्दी। मुण्डितकेशो व्युप्तकेशः। पाशुपतादिवेषेण कपर्दित्वम्। यत्यादिवेषेण मुण्डितकेशत्वम् ॥ ४ ॥

भ०भा०भा० नमः कपर्दिने च स्पष्टम्। व्युप्तकेशाय च। मुण्डितकेशाय च। यजमानमूर्त्तये। अर्धमुण्डितकेशो व्युप्तकेश इत्यन्ये। पूर्वपदप्रकृतिस्वरत्वम्। तत्रापि गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। उदात्तस्वरितयोर्यण इत्युकारः स्वर्यते ॥ ४ ॥

नमः सहस्राक्षाय च शतधन्वने च इति ॥ ५ ॥

नमः सहस्राक्षायेति सहस्रऽअक्षाय च शतधन्वन इति शतऽधन्वने च ॥ ५ ॥

सा०भा० इन्द्रवेषेण सहस्राक्षत्वम् । सहस्रभुजावतारित्वेन शतसंख्याकैर्धनुर्भिरुपेतत्वम् ॥ ५ ॥

भ०भा०भा० नमः सहस्राक्षाय च। बहुचक्षुषे इन्द्ररूपिणे वा। शतधन्वने च। बहुधन्वने बह्वायुधाय वा ॥ ५

नमो॑ गिरि॒शाय॑ च शिपिवि॒ष्टाय॑ च इति ॥ ६ ॥

नमः॑ गि॒रि॒शाय॑ च॒ शि॒पि॒वि॒ष्टायेति॑ शिपिऽवि॒ष्टाय॑ च॒ ॥६॥

सा० भा० गिरौ कैलासे शेते तिष्ठतीति गिरिशः। विष्णुमूर्तिधारी शिपिविष्टः। "विष्णुः शिपिविष्टः" इति श्रुतेः ॥ ६ ॥

भ०भा०भा० नमो गिरिशाय च। व्याख्यातमेव। शिपिविष्टाय च। निर्वेष्टितशेपाय सर्वदा देवदारुवनप्रदेशादौ वा। यद्वा। आदित्यात्मने। यथा। स्कन्दपुराणे "शैत्याच्छयनयोगाद्वा शीति वारि प्रचक्षते। तत्पानाद्रक्षणाद्वापि शिपयो रश्मयो मताः। तेषु प्रविष्टः सविता शिपिविष्टस्तदोच्यते"। यद्वा पशवः शिपयः। "यज्ञो वै विष्णुः पशवः शिपिः" इतिश्रुतेः। सर्वप्राणिष्वन्तर्यामिरूपेण प्रविष्टायेत्यर्थः ॥ ६ ॥

नमो॑ मी॒ढुष्ट॑माय॒ चेषु॑मते च इति ॥ ७ ॥

नमः॑ मी॒ढुष्ट॑मा॒येति॑ मी॒ढुः॒ऽत॒मा॒य॒ च॒ इषु॑म॒त इतीषु॑ऽम॒ते॒ च॒ ॥ ७ ॥

सा० भा० मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः। बाणधारक इषुमान् ॥ ७ ॥

भ० भा०भा० नमो मीढुष्टमाय च। सेक्तृतमाय। अयस्मयादित्वेन भसंज्ञत्वाद्वसोः संप्रसारणम्। इषुमते च बह्विषवे इषुहस्ताय वा महाशूरायेति यावत् ॥ ७ ॥

नमो॑ ह्र॒स्वाय॑ च वा॒मनाय॑ च इति ॥ ८ ॥

नमः॑ ह्र॒स्वाय॑ च॒ वा॒म॒नाय॑ च॒ ॥ ८ ॥

सा० भा० शरीरे अल्पप्रमाणत्वम् ह्रस्वत्वम् अङ्गुल्याद्यवयवसंकोचात् वामनत्वम् ॥ ८ ॥

भ०भा०भा० नमो ह्रस्वाय च। अल्पप्रमाणाय। वामनाय च। सङ्कुचिताङ्गाय ॥ ८ ॥

नमो बृहते च वर्षीयसे च इति ॥ ९ ॥

नमः बृहते च वर्षीयसे च ॥ ९ ॥

सा०भा० आकारेण प्रौढो बृहन्। गुणैः समृद्धो वर्षीयान् ॥ ९ ॥

भ० भा० भा० नमो बृहते च। आकारेण महते। बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वम्। वर्षीयसे च वृद्धतमाय आकारेण ज्ञानादिना वा। प्रियस्थिरादिना वृद्धस्य वर्षादेशः ॥ ९ ॥

नमो वृद्धाय च संवृध्वने च इति ॥ १० ॥

नमः वृद्धाय च संवृध्वन इति संऽवृध्वने च ॥ १० ॥

सा० भा० वयसाधिको वृद्धः। सम्यक् श्रुतिभिर्वर्धितः संवृध्वा ॥ १० ॥

भ० भा० भा० नमो वृद्धाय च। वयसा महते। संवृध्वने च। सम्यक् वृद्धाय। स्तुतिभिर्नित्यं वर्द्धमानायेत्यर्थः। यथा "वर्द्धन्तु त्वा सुष्टुतयः" इति। यद्वा सम्यग्वर्धयित्रे भक्तानाम्। पूर्ववण्णिलुक्। अन्येभ्योऽपि दृश्यन्ते इति क्वनिप् ॥ १० ॥

नमो अग्रियाय च प्रथमाय च इति ॥ ११ ॥

नमः अग्रियाय च प्रथमाय च ॥ ११ ॥

सा० भा० जगदुत्पत्तेः पूर्वमवस्थितोऽग्रियः। सभायां मुख्यः प्रथमः ॥ ११ ॥

भ० भा० भा० नमो अग्रियाय च अग्रे भवाय। अग्राद्यदिति यत्। यतोऽनाव इत्याद्युदात्तत्वम्। छान्दस इकारोपजनः। यद्वा। घच्छौचेति घः। छान्दसमाद्युदात्तत्वम्। प्रथमाय च प्रधानाय च ॥ ११ ॥

नम आशवे चाजिराय च इति ॥ १२ ॥

नमः आशवे च अजिराय च ॥ १२ ॥

सा० भा० आशुर्व्यापी। अजिरो गमनकुशलः ॥ १२ ॥

भ० भा० भा नम आशवे च। शीघ्रव्यापिने। अश्नोतेः कृवापाजिमीत्युण्प्रत्ययः। अजिराय च। गमनकुशलाय। अज गतिक्षेपणयोः। अजिरशिशिरादौ किरच्प्रत्ययो वीभावाभावश्च निपात्यते ॥ १२ ॥

नमः शीघ्रियाय च शीभ्याय च इति ॥ १३ ॥

नमः शीघ्रियाय च शीभ्याय च ॥ १३ ॥

सा॰ भा॰ शीघ्रियः शीघ्रगामी । शीभशब्द उदकप्रवाहवाची तत्रावस्थितः शीभ्यः ॥ १३ ॥

भ०भा०भा० नमः शीघ्रियाय च । शीघ्रं वहन्तीष्वप्सु भवाय । पूर्ववदिकारोपजनः। शीभ्याय च शीघ्रं वहन्तीष्वप्सु भवाय। शीघ्रस्यैवावान्तरभेदः शीभ्भावः । उभयत्र भवे छन्दसीति यत् । यतोऽनाव इत्युदात्तत्वम् । उत्तरत्रापि व्यचामनेनाद्युदात्तत्वं वेदितव्यम् ॥ १३ ॥

नम॑ ऊ॒र्म्या॑य चावस्व॒न्या॑य च इति ॥ १४ ॥

नमः॑ ऊ॒र्म्या॑य॑ च॒ अ॒व॒स्व॒न्या॑येत्य॑वऽस्व॒न्या॑य च॒ ॥ १४ ॥

सा॰भा॰ ऊर्मैस्तरङ्गैरन्वित ऊर्म्यः[1] । अवस्वने ध्वनिरहिते स्थिरजलेऽवस्थितोऽवस्वन्यः ॥ १४ ॥

भ॰ भा॰ भा॰ नम ऊर्म्याय च । ऊर्मिषु तरङ्गेषु भवाय । छान्दस आद्युदात्तत्वाभावः। यस्येति लोपात्प्रागेव स्वरः कर्त्तव्यः। तत्र व्यचूत्वाभावात्स्वरितत्वमेव प्रवर्त्तते । अवस्वन्याय च । स्थिरमुदकमवस्वनम् । अवाचीनः स्वनोऽत्रेति । अपगतः स्वनोऽस्मादिति वा । अपार्थोऽवशब्दस्तेन स्तिमितमुच्यते । तत्र भवाय ॥ १४ ॥

नमः॑ स्रो॒त॒स्या॑य च॒ द्वीप्या॑य च इति ॥ १५ ॥

नमः॑ स्रो॒त॒स्या॑य च॒ द्वीप्या॑य च॒ ॥ १५ ॥

सा॰ भा॰ स्रोतसि प्रवाहे स्थितः स्रोतस्यः। द्वीपे जलमध्यवर्त्तिभूमौ स्थितो द्वीप्यः ॥ १५ ॥

अत्रैकस्मिन् यजुषि चतुर्थ्यन्ताभ्यां पदाभ्यां नमःशब्दं पृथगन्वेतुं समुच्चयार्थौ चकारौ पठितौ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

भ॰ भा॰ भा॰ नमः स्रोतस्याय च । स्रोतसि भवाय । द्वीप्याय च । जलत उन्नता भूमिर्द्वीपः द्वयोः पार्श्वयोरापो यस्मिन्देशे सन्तीति द्वीपः । ऋक्पूरब्धूरितिसमासान्तः । व्यन्तरुपसर्गेभ्योऽप ईदितीत्वम् । पूर्ववत्प्रत्ययः । एतेषामधिष्ठातृवृत्तिभेदाः ॥ १५ ॥

---

1 घ॰ ऊर्मौ तरङ्गे स्थित ऊर्म्यः ।

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रमश्ने पञ्चमोऽनुवाकः॥५॥

॥ इति पञ्चमोऽनुवाकः ॥

---

पञ्चमेऽनुवाके कानिचिदन्यतरतो नमस्काराणि यजूंष्युक्तानि। अथ षष्ठे तथाविधान्येवान्यानि कानिचिद्यजूंष्युच्यन्ते ॥

॥ तत्र विद्यमानानि पञ्चदश यजूंष्याह ॥

नमो ज्येष्ठाय च कनिष्ठाय च इति ॥ १ ॥

नमः ज्येष्ठाय च कनिष्ठाय च ॥ १ ॥

सा० भा० विद्यैश्वर्यादिभिरधिको ज्येष्ठः । तद्रहितः अल्पः कनिष्ठः ॥ १ ॥

भ० भा० भा० नमो ज्येष्ठाय च । वृद्धतमाय प्रशस्यतमाय । वृद्धस्य चेति ज्यादेशः । कनिष्ठाय च । युवतमाय बालतमाय स्वल्पतमाय वा । युवाल्पयोः कनन्यतरस्यामिति कनादेशः । ज्येष्ठकनिष्ठयोर्वयसीत्यन्तोदात्तत्वम् । प्रशस्यतमो वा ज्येष्ठः । ज्यचेति ज्यादेशः । व्यत्ययेनान्तोदात्तत्वम् ॥ १ ॥

नमः पूर्वजाय चापरजाय च इति ॥ २ ॥

नमः पूर्वजायेति पूर्व ऽजाय च अपरजायेत्यपरऽजाय च ॥ २ ॥

सा० भा० पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजः। अपरस्मिन् जगदवसानकाले कालाग्न्यादिरूपेणोत्पन्नोऽपरजः ॥ २ ॥

भ० भा० भा० नमः पूर्वजाय च । पूर्वस्मिन्काले जाताय । अजातायेति यावत् । सप्तम्यां जनेर्डः । या सर्वप्राणिभ्यः पूर्वभाविनी सत्ता सेह जननेन लक्ष्यते । मुख्यस्य जन्मनोऽभावात् । श्रूयते हि । "अजात इत्येवं कश्चिद्भीरुः प्रपद्यते" इति । अपरजाय च । अपरस्मिन्काले जाताय सर्वप्राणिभ्य ऊर्ध्वमपि विद्यमानाय ॥ २ ॥

नमो मध्यमाय चापगल्भाय च इति ॥ ३ ॥

नमः मध्यमाय च अपगल्भायेत्यपऽगल्भाय च ॥ ३ ॥

---

१ ख० ग० घ० काले संहर्तुम् ।

सा० भा० मध्यकाले देवतिर्यगादिरूपेणोत्पन्नो मध्यमः । अपगल्भोऽप्ररूढेन्द्रियो बालः ॥ ३ ॥

भ० भा० भा० नमो मध्यमाय च । मध्यमकाले भवाय विद्यमानाय । अपगल्भाय च । अत्यन्तशिशवे । गल्भ धाष्टर्ये पचाद्यच् ॥ ३ ॥

नमो जघन्याय च बुध्नियाय च इति ॥ ४ ॥

नमः जघन्याय च बुध्नियाय च ॥ ४ ॥

सा० भा० जघने गवादीनां पश्चाद्भागे वत्सादिरूपेण भवो जघन्यः । बुध्ने वृक्षादीनां मूले शाखादिरूपेणोत्पन्नो बुध्नियः ॥ ४ ॥

भ० भा० भा० नमो जघन्याय च जघनं कटिपश्चाद्भागः तत्र भवाय । पूर्ववत् भवे छन्दसीति यत् । बुध्नियाय च । बुध्नं मूलं तत्र भवाय । पूर्ववदिकारोपजनः ॥ ४ ॥

नमः सोभ्याय च प्रतिसर्याय च इति ॥ ५ ॥

नमः सोभ्याय च प्रतिसर्यायेति प्रतिसर्याय च ॥ ५ ॥

सा० भा० उभाभ्यां पुण्यपापाभ्यां सह वर्त्तत इति सोभ्यः मनुष्यलोकः । अत एवाथर्वणिका आमनन्ति । "पुण्येन पुण्यलोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्" इति । तत्र भवः सोभ्यः । प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धः तमर्हतीति प्रतिसर्यः ॥ ५ ॥

भ० भा० भा० नमः सोभ्याय च । सोभं नाम गन्धर्वनगरम् । "शाल्वः सोभमधिष्ठाय" इति महाभारते दर्शनात् । इदं च सर्वनगरोपलक्षणम् । तत्र भवाय । पूर्ववदाद्युदात्तत्वाभावः । केचिदाहुः । उभाभ्यां शीतोष्णाभ्यां द्वन्द्वरूपाभ्यां सहितं सोभं तत्र भवाय । अकृतसन्धेरेव स्वरः प्रवर्त्तते । प्रतिसर्याय च । प्रतिकूलं सरणं प्रतिसरः रक्षाबन्धो वा तत्र भवाय । पूर्ववद्यत् ॥ ५ ॥

नमो याम्याय च क्षेम्याय च इति ॥ ६ ॥

नमः याम्याय च क्षेम्याय च ॥ ६ ॥

सा० भा० यमलोके पापिशिक्षकरूपेणोत्पन्नो[1] याम्यः । क्षेमो मोक्षः तमर्हतीति क्षेम्यः ॥ ६ ॥

भ० भा० भा० नमो याम्याय च । यम उपरमः अन्तकालः प्राणसंयमनं वा तत्र भवाय । यद्वा । यमस्य पुरं याम्यम् । यमाच्चेति[2] वक्तव्यमिति ण्यः । तत्र भवाय ।

---

1 ख० ग० लोकं नयति । २ क० ण भवो याम्यः ।

पूर्ववद्यत् । क्षेम्याय च । क्षेमो रक्षा मोक्षो वा गुप्तिस्थानं वा तत्र भवाय ॥६॥

नम उर्वर्याय च खल्याय च इति ॥ ७ ॥

नमः उर्वर्याय च खल्याय च ॥ ७ ॥

सा० भा० उर्वरा सर्वसस्याढ्या भूमिस्तामर्हति धान्यविशेषरूपेणेत्युर्वर्यः । खलो धान्यविवेचनदेशः तमर्हति मेढ्यादिरूपेणेति खल्यः ॥ ७ ॥

भ० भा० भा०नम उर्वर्याय च । उर्वरा सर्वसस्याढ्या भूमिः तत्र भवाय । खल्याय च । सस्यानां शोधनस्थानं खलं तत्र भवाय ॥ ७ ॥

नमः श्लोक्याय चावसान्याय च इति ॥ ८ ॥

नमः श्लोक्याय च अवसान्यायेत्यवऽसान्याय च ॥ ८ ॥

सा० भा० श्लोकाः वैदिकमन्त्राः तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः । अवसानं वेदान्तस्तत्प्रतिपाद्यत्वेन तत्र भवोऽवसान्यः ॥ ८ ॥

भ० भा० भा० नमः श्लोक्याय च । श्लोक संघाते । पादबद्धोऽक्षरसंघातः श्लोकः तत्र भवाय । अवसान्याय च । अवसानं सर्वार्थोपसंहारः जीवितावसानं वा तत्र भवाय । अपर आह । श्लोक्याय वेदेषु भवाय । अवसान्याय च । वेदानामवसाने उपनिषदि भवाय ॥ ८ ॥

नमो वन्याय च कक्ष्याय च इति ॥ ९ ॥

नमः वन्याय च कक्ष्याय च ॥ ९ ॥

सा० भा० वने वृक्षादिरूपेण भवः वन्यः । कक्षे लतादिरूपेण भवः कक्ष्यः ॥९॥

भ० भा० भा० नमो वन्याय च । वृक्षादिरूपेण वने भवस्तस्मै । कक्ष्याय च । वनकक्षावुक्तौ । तत्र भवाय । कक्ष्यः लतादिरूपः । एते भूमेरधिष्ठातुर्भेदाः ॥९॥

नमः श्रवाय च प्रतिश्रवाय च इति ॥ १० ॥

नमः श्रवाय च प्रतिश्रवायेति प्रतिऽश्रवाय च ॥ १० ॥

सा० भा० श्रूयत इति श्रवः शब्दः । प्रतिश्रवः प्रतिध्वनिः ॥ १० ॥

भ० भा० भा० नमः श्रवाय च । शब्दात्मने । श्रूयत इति श्रवः शब्दः । यद्वा सर्वत्र श्रूयमाणाय सुप्रसिद्धाय । पुंसि संज्ञायां घः । प्रतिश्रवाय च । प्रतिशब्दरूपाय प्रतिवचनरूपाय वा ॥ १० ॥

नम॑ आ॒शुषे॑णाय चा॒शुर॑थाय च इति ॥ ११ ॥

नम॑ः आ॒शु॒षे॒णा॒येत्या॒शु॒ऽसे॒ना॒य॒ च॒ आ॒शु॒र॑था॒येत्या॒शु॒ऽर॒-
था॒य॒ च॒ ॥ ११ ॥

सा० भा० आशुः शीघ्रगामिनी सेना यस्यासावाशुषेणः । आशुः शीघ्रगामी रथो यस्यासावाशुरथः ॥ ११ ॥

भ० भा० भा० नम आशुषेणाय च । शीघ्रव्यापिसेनाय । सुषामादिषु चेतिष-त्वम् । आशुरथाय च । शीघ्रगामिरथाय ॥ ११ ॥

नम॒ः शूरा॑य चावभि॒न्दते च इति ॥ १२ ॥

नम॑ः शूरा॑य च॒ अ॒व॒भि॒न्द॒त इत्य॑वऽभि॒न्द॒ते च॒ ॥ १२ ॥

सा० भा० शूरो युद्धे धैर्यवान् । अवभिन्दन् वैरिणां महतां ॥ १२ ॥

भ० भा० भा०नमः शूराय च । महावीरायाभीरवे । अवभिन्दते च । स्वभक्त-विद्विषामयत्नेन भेत्त्रे । धर्मद्विषो मूर्ध्नो भिनत्तीति । शतुरनुम इति विभक्ते-रुदात्तत्वम् ॥ १२ ॥

नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च॒ इति ॥ १३ ॥

नम॑ः व॒र्मिणे॑ च॒ व॒रू॒थिने॑ च॒ ॥ १३ ॥

सा० भा० वर्मी कञ्चुकोपेतः । वरूथी गृहोपेतः ॥ १३ ॥

भ० भा० भा० नमो वर्मिणे च । कञ्चुकधारिणे । व्रीह्यादित्वादिनिः । वरूथिने च । वरूथं सारथेर्गुप्तिस्थानं तद्वते । विशिष्टगृहाय वा ॥ १३ ॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च इति ॥ १४ ॥

नम॑ः बि॒ल्मिने॑ च॒ क॒व॒चिने॑ च॒ ॥ १४ ॥

सा० भा० बिल्मं बिलोपेतं युद्धे शिरोरक्षकं तदस्यास्तीति बिल्मी । कवचः शरीररक्षकः सोऽस्यास्तीति कवची ॥ १४ ॥

भ० भा० भा० नमो बिल्मिने च । बिल्मं बिलं बिलवत्सच्छिद्रं शिरस्त्राणादि । भस्मभाजनमित्यन्ये "बिल्मं भाजनम्" इति नैरुक्ताः । तद्वते । कवचिने । अ-ङ्गरक्षावते । यद्वा । कवचमागुल्फावलम्बि कञ्चुकम् ॥ १४ ॥

नम॑ः श्रु॒ताय॑ च श्रु॒तसे॒नाय॑ च इति ॥ १५ ॥

नमः॑ श्रु॒ताय॑ च श्रु॒त॒से॒नाये॑ति॒ श्रु॒तऽसे॑नाय च ॥ १५ ॥

सा॰भा॰ श्रुतो वेदेषु प्रसिद्धः । श्रुता बन्दिषु प्रसिद्धा सेना यस्यासौ श्रुतसेनः ॥ १५ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

भ॰ भा॰ भा॰ नमः श्रुताय च विख्याताय श्रुतिप्रसिद्धाय वा । यदुक्तम् "विश्वस्याधिपतिः विश्वस्याधिष्ठाता विश्वाकारस्त्वम्" इति । तत्र श्रुतिरेव प्रमाणमिति भावः । श्रुतसेनाय च । विख्यातसेनाय श्रुतिप्रसिद्धसेनाय वा । यानि तवोक्तान्यायुधानि शरादीनि तान्यपि श्रुतिप्रसिद्धान्येवेति । व्यत्ययेन समासान्तोदात्तत्वम् ॥

एतयोरनुवाकयोः पुरश्चरणम् । त्रिरात्रं चरुभोजी स्याज्जपेदथ निरन्तरम् । एकादशदिनानि कृतपुरश्चरणो भवति । ततः कर्मोच्यते । एताभ्यां श्वेतकमलैः प्रतिनमस्कारं मासं लिङ्गस्योपरि क्षिपेदेकादशकृत्वः । राज्यश्रीर्वर्धते । ब्राह्मणानेकादश भोजयेद्देवस्य दक्षिणामूर्तेः सकाशे । राज्ञो जन्मदिने राजाग्नौ मथितेऽग्नौ वा अश्वत्थसमिधां घृताक्तानामेकविंशतिसहस्रं जुहुयात् । दूर्वाणामेकादशसहस्रम् । एवं कृते राज्ञो जयायुषी वर्धेते । एतौ विजयार्थं मासि मासि शतसहस्रं जपेत् । एताभ्यां संग्रामे प्रत्यासन्ने राज्ञो महानसपक्वान्नेन सोपदंशेन भक्तेन दधिमधुघृताक्तेन प्रतिनमस्कारं एकादशकृत्वो हुत्वा शेषं बलिं भूमौ निधायादाय जलमिश्रं प्रतिसेनामभिप्रक्षिपेत् । सा सेनाचिरान्नष्टा भवति एताभ्यामेव शुद्धतण्डुलैराज्यसिक्तैरग्नौ हुत्वा शेषं शत्रुमभिप्रक्षिपेत् । स नष्टो भवति । एताभ्यामेव राज्ञः सर्वायुधानि स्पृष्ट्वा सहस्रमभिमन्त्रयेत् । तेषां तेजो वर्धते । एताभ्यामेव परसेनां प्रतिक्षिपेत् सा सेना चिरं नष्टा भवति । एताभ्यामेव परसेनास्तम्भ उच्यते । अर्कसमिद्भिरादित्यं प्रतिनमस्कारं शतसहस्रं जुहुयात् । परसेनास्तम्भं करोमि स्वाहा । एवं कृते शत्रुसेना स्तम्भिता भवति । एताभ्यामेव राज्ञः सर्वाणि भोज्यवस्तून्यभिमन्त्रयेत् । तान्यमृतानि भवन्ति । एताभ्यामेव परसेनाशोषणमिच्छन् वक्ष्यमाणं कुर्यात् । हरिणवराहशशकपिञ्जलकलविङ्कमृगाणां मांसैर्नद्यन्तराले शूद्रानीताग्नौ प्रतिद्रव्यं शतसहस्रं जुहुयात् । अपूपैरपि आहुतिमात्रं लक्षं जुहुयात् । प्रतिनमस्कारं परराष्ट्रप्रजाशोषणं करोमि स्वाहेति । एवं कृते परराष्ट्रप्रजाः शुष्यन्ति । तेषां दक्षिणाः सुवर्णरजतगोभूमिवस्त्रादय इति राज्ञामेवमुक्तम् । अन्येषामुच्यते । वन्ध्यानामनपत्यानां एताभ्यां स्वाग्नौ प्रतिनमस्कारं उदुम्बरसमिधां दधिमधुघृताक्तानामेकविंशतिसहस्रं जु-

हुयात्। नमस्कारगणितकलशैस्तन्तुभिर्वेष्टितैर्नवपटावृतैर्जलपूर्णैः प्रतिनमस्कारमभिषेकः। जपेदष्टसहस्रमेताभ्यामेव महादेवमभिषिंचेत् सप्तनाडिकामात्रमेतौ जपेत्प्रदक्षिणमष्टसहस्रं कुर्यात्। एताभ्यां पिष्टपिण्डमभिमन्त्र्य प्राशयेत्। एताभ्यां शमीपत्रैर्नद्याः स्रोतसि प्रतिनमस्कारं एकादशकृत्वो जपेत्। एतैः प्रयोगैः शूद्राणां रुद्रसमानः पुत्रो भवति। स्त्रीपुंसोरष्टत्रिंशदष्टचत्वारिंशद्वर्षादूर्ध्वमपि प्रयुञ्जानयोः पुत्रो जायते। यस्तु स्ववंशकरो भवति। शिवभक्तो जायते तस्य हस्तयोः शूलाङ्को भवति। एताभ्यां घृतपायसं श्रपयित्वाष्टसहस्रं जुहुयात्। तदान्यजन्मनि ब्राह्मणो जायते। एताभ्यां सूत्रमभिमन्त्र्य गर्भिणीहस्ते बध्नीयात् तदा गर्भनाशो न स्यात्। एताभ्यां कुमारग्रहादिग्रस्तानां भस्मधूपरक्षां कारयेत् रात्रौ च शिखां बध्नीयात्। कुमारग्रहभयं न भवति। ध्यानम्। गौरीकराम्बुजन्यस्तस्वर्णशैलशरासनम्। इषुहस्तं रथारूढं नरनारीतनुं स्मरेत्॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने षष्ठोऽनुवाकः॥६॥

॥ इति षष्ठोऽनुवाकः॥

---

सा० भा० षष्ठेऽनुवाके यान्यन्यतरतो नमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिद्यजूंषि सप्तमेऽभिधीयन्ते॥

भ० भा० भा० विश्वाधिपत्यं देवस्य प्रतिपाद्य तस्य घोषणमेव कुर्वन्नाह॥

## ॥ तत्र विद्यमानानि षोडश यजूंष्याह॥

**नमो॑ दुन्दु॒भ्या॑य चाहन॒न्या॑य च इति॥ १॥**

**नमः॑ दुन्दु॒भ्या॑य च॒ आ॒ह॒न॒न्या॒येत्या॑हन॒न्या॑य च॒॥ १॥**

सा०भा०दुन्दुभ्यां भेर्यां भवः शब्दः दुन्दुभ्यः। आहन्यते ताड्यतेऽनेनेत्याहननः दुन्दुभ्याघातार्थो दण्डस्तत्र ताडनरूपेणोत्पन्नः आहनन्यः॥ १॥

भ० भा० भा० नमो दुन्दुभ्यायचेत्यनुवाकस्य हेमकोश ऋषिः। श्रीरुद्रो देवता। महापङ्क्तिश्छन्दः।नमो दुन्दुभ्याय च। दुन्दुभौ भवाय दुन्दुभिशब्दात्मने। प्रसिद्धविभवायेति यावत्। यद्वा दुन्दुभ्यादिवादित्ररूपाय यथा " सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायाम्" इति। पूर्ववत् भवे छन्दसीति यत्। आहनन्याय च दुन्दुभिराहन्यतेऽनेनेत्याहननो वंशदण्डः तत्र भवाय॥ १॥

**नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च इति॥ २॥**

नमः धृष्णवे च प्रमृशायेति प्रऽमृशाय च ॥ २ ॥

सा०भा० धृष्णुर्युद्धे पलायनरहितः। प्रमृशः परसैन्यवृत्तान्तपरामर्शकः ॥२॥

भ० भा० भा० नमो धृष्णवे च धर्षणशीलाय । समस्तजगद्रक्षणकुशलाय वा। त्रसिगृधीत्यादिना क्नुः। शक्तोऽप्यविशेषश्चेत्किमनेनेत्याह। प्रमृशाय च। सर्वपरामर्शकुशलाय पण्डिताय । इगुपधलक्षणः कः। अपर आह। प्रकृष्टशीलः प्रमृश इति। सर्वे ह्यात्मनः कामाय देवं भजन्ते। श्रेयसे निःश्रेयसाय वा तं स्वार्थमिव स्वयं मन्यमानो देवस्तान् रक्षतीति ॥ २ ॥

नमो दूताय च प्रहिताय च इति ॥ ३ ॥

नमः दूताय च प्रहितायेति प्रऽहिताय च ॥ ३ ॥

सा० भा० दूतस्तु वृत्तान्तज्ञापनकुशलः। प्रहितः स्वामिना प्रेषितः पुरुषः ॥३॥

भ० भा० भा० किं बहुना दौत्यादिकमपि कृत्वा भक्तान् रक्षतीत्याह। नमो दूताय च। दूतः संदेशहरः तदात्मनापि कदाचित् वर्तमानायेति भक्तवत्सलतयाभिरूपेण वा देवानां दूत्यं कुर्वते वा। यथा। "अग्निं दूतं वृणीमहे" "अग्निर्देवानां दूत आसीत्" "त्वं दूतः कविरसि प्रचेताः" इति। प्रहिताय च। प्रेषकराय भक्तवत्सलतयैव हि कदाचित्तदपि करोति । अग्न्यभिप्रायं वा। स हि देवान्प्रति यजमानः प्रहितो भवति। गतिरनन्तर इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा । प्रकर्षेण हितः प्रहितः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

नमो निषङ्गिणे चेषुधिमते च इति ॥ ४ ॥

नमः निषङ्गिण इति निऽसङ्गिने च इषुधिमत इतीषुधिऽमते च ॥ ४ ॥

सा० भा० निषङ्गी खड्गयुक्तः। इषुधिमान् बाणाधारयुक्तः ॥ ४ ॥

भ० भा० भा० नमो निषङ्गिणे चेषुधिमते च। व्याख्यातौ। पूर्वं स्तेयकरणविषयतया विशेषणद्वयमाम्नातम्। इदानीं तु रक्षणविषयमिति विवेकः। भूतरक्षणार्थमायुधग्रहणमपि देवः करोतीति ॥ ४ ॥

नमस्तीक्ष्णेषवे चायुधिने च इति ॥ ५ ॥

नमः तीक्ष्णेषव इति तीक्ष्णऽइषवे च आयुधिने च ॥ ५ ॥

सा०भा० तीक्ष्णा इषवो यस्यासौ तीक्ष्णेषुः। बहून्यायुधान्यस्य सन्तीत्यायुधी ॥ ५ ॥

भ० भा० भा०नमस्तीक्ष्णेषवे च । निशितशराय। आयुधिने च । बहुभिः प्रशस्तैर्वा आयुधैः युक्ताय। भूम्नि प्रशंसायां वा मत्वर्थीय इनिः ॥ ५ ॥

नमः॑ स्वायु॒धाय॑ च सु॒धन्व॑ने च इति ॥ ६ ॥

नमः॑ स्वा॒यु॒धायेति॑सु॒ऽआ॒यु॒धाय॑ च॒ सु॒धन्व॑न॒ इति॑सु॒ऽधन्व॑ने च॒ ॥ ६ ॥

सा० भा० शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः। शोभनं धनुः पिनाकरूपं यस्यासौ सुधन्वा ॥ ६ ॥

भ० भा० भा० नमः स्वायुधाय च। शोभनायुधाय। अमोघायुधाय वा। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। यद्वा। शोभनाकारायुधः स्वायुधः तस्मै। आयुधानि गृह्णातीति। किञ्च त्वमेव तदर्हत्वात्तच्छोभन इति। यथा। "अर्हन्बिभर्षि सायकानि धन्व" इति च। सुधन्वने। शोभनकोदण्डाय। प्राधान्यादस्य पृथगुपादानम् अतिशयप्रदर्शनार्थं वा शोभनतरधन्वने सौवर्णत्वात्। आद्युदात्तत्वम्। व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ ६ ॥

नम॒ः स्रुत्याय च॒ पथ्याय च इति ॥ ७ ॥

नमः॑ स्रुत्या॑य च॒ पथ्या॑य च॒ ॥ ७ ॥

सा० भा०स्रुतिः पादसंचारमात्रयोग्यः क्षुद्रमार्गस्तमर्हतीति स्रुत्यः। पन्थाः रथाश्वादिसंचारक्षमः प्रौढो मार्गस्तमर्हतीति पथ्यः ॥ ७ ॥

भ० भा० भा०अधुना भृत्यरक्षणविषयतया सर्वत्रापि सन्नियन्तेति प्रतिपादयति। नमः स्रुत्याय च। स्रुतयः क्षुद्रमार्गाः तत्र भवाय। पूर्ववत् भवे छन्दसीति यत्। यतोऽनाव इत्याद्युदात्तत्वम्। पथ्याय च पन्थानो महामार्गाः तत्र भवाय ॥ ७ ॥

नमः॑ का॒व्या॑य च नी॒प्या॑य च इति ॥ ८ ॥

नमः॑ का॒व्या॑य च॒ नी॒प्या॑य च॒ ॥ ८ ॥

सा० भा०कुत्सितमटति जलमत्रेति काटोऽल्पप्रवाहयोग्यः कुल्याप्रदेशस्तत्र जलरूपेण भवः काव्यः। यस्मिन् प्रदेशे पर्वताग्रात् जलं न्यग्भावेन पतति स प्रदेशो नीपस्तमर्हतीति। तत्र जलरूपेणावस्थितो नीप्यः ॥ ८ ॥

भ० भा० भा०नमः काट्याय च । काटः कूपः । " इन्द्रः कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळ" इति दर्शनात् । यद्वा कट्यां भवं काटं लिङ्गम् ।"नता अर्वा रेणुककाटो अश्नुते" इति च दृश्यते । तत्र भवः काट्यः । लिङ्गे नित्यं संनिहितायेति यावत् । नीप्याय च । निर्गता नीता आपो यस्मिन्स नीपः प्रदेशः । द्व्यन्तरुपसर्गेभ्योऽप ईत् । तत्र भूताय । काट्यनीप्ययोराद्युदात्तत्वाभावश्छान्दसः । यस्येतिलोपात्तु प्रागेव स्वरप्रवृत्तेर्द्व्यचूत्वाभावः ॥ ८ ॥

नमः सूद्याय च सरस्याय च इति ॥ ९ ॥

नमः सूद्याय च सरस्याय च ॥ ९ ॥

सा० भा० सूदः कर्दमप्रदेशस्तत्रत्यजलरूपः सूद्यः । सरः प्रसिद्धं तत्रत्यजलरूपः सरस्यः ॥ ९ ॥

भ० भा०भा० नमः सूद्याय च । यत्र कदाचिदपि जलाभावो न दृश्यते स सूदः कर्दमः तत्र भवाय । सरस्याय च । सरः कृत्रिमजलाशयः तत्रत्यजलरूपः सरस्यः तत्र भवाय ॥ ९ ॥

नमो नाद्याय च वैशन्ताय च इति ॥ १० ॥

नमः नाद्याय च वैशन्ताय च ॥ १० ॥

सा० भा० नदीगतजलरूपो नाद्यः । अल्पसरो वेशन्तः तत्रत्यजलरूपो वैशन्तः ॥ १० ॥

भ० भा०भा० नमो नाद्याय च । नदीगतजलरूपो नाद्यः तत्र भवाय । पाथोनदीभ्यां ड्यण् । यद्वा । नादे भवो नाद्यः तस्मै । पूर्ववदाद्युदात्तत्वाभावः । वैशन्ताय च । अल्पसरो वेशन्तः तत्रत्यजलरूपो वैशन्तः । देवतर्पणाद्यर्थं यत्रापो वेश्यन्ते ते वैशन्ताः देवखाताः । जॄविशिभ्यां झच् । तत्र भवाय । वेशन्तहिमवद्भ्यामण् ॥ १० ॥

नमः कूप्याय चावट्याय च इति ॥ ११ ॥

नमः कूप्याय च अवट्याय च ॥ ११ ॥

सा०भा०कूपस्थजलरूपः कूप्यः । अवटस्थजलरूपोऽवट्यः ॥ ११ ॥

भ० भा०भा० नमः कूप्याय च । कूपे भवाय । कूपस्थजलरूपः कूप्यः तस्मै । अवट्याय च । अवटो गर्त्तः अवटस्थजलरूपोऽवट्यः । तत्र भवाय ॥ ११ ॥

नमो वर्ष्याय चावर्ष्याय च इति ॥ १२ ॥

नमः वर्ष्याय च अवर्ष्याय च ॥ १२ ॥

सा० भा० वर्षजलरूपो वर्ष्यः। वर्षनिरपेक्षः समुद्रादिजलरूपोऽवर्ष्यः ॥१२॥

भ० भा० भा० नमो वर्ष्याय च। वर्षजले भवाय। अवर्ष्याय च। न वर्ष्यः अवर्ष्यः समुद्रजले भवाय। ययतोश्चातदर्थे इति गुणप्रतिषेधवृत्तेर्नञः परस्यान्तोदात्तत्वम्। केचिदाहुः। अवर्षजले समुद्रादौ भवायेति। तदा व्यत्ययेनान्तोदात्तत्वम् ॥ १२ ॥

नमो मेघ्याय च विद्युत्याय च इति ॥ १३ ॥

नमः मेघ्याय च विद्युत्यायेति विऽद्युत्याय च ॥ १३ ॥

सा० भा० मेघेषु स्थितो मेघ्यः। विद्युता सह चरतीति विद्युत्यः ॥ १३ ॥

भ० भा० भा० नमो मेघ्याय च। मेघे भवाय पूर्ववदाद्युदात्तत्वाभावः। विद्युत्याय च। विद्युता सह चरति इति विद्युत्यः तत्र भवाय ॥ १३ ॥

नम ईध्रियाय चातप्याय च इति ॥ १४ ॥

नमः ईध्रियाय च आतप्यायेत्याऽतप्याय च ॥ १४ ॥

सा० भा० ईध्रं निर्मलत्वेन दीप्यमानं शरदभ्रं तत्र भवः ईध्रियः। आतपेन सह वृष्टः आतप्यः ॥ १४ ॥

भ० भा० भा० नम ईध्रियाय च। ईध्रं दीप्तं शरदभ्रम्। नैर्जल्यात्। वा विधेरिति विधीयमानो बहुलवचनात् केवलादपि क्रन् प्रत्ययः। तत्र भवाय। इकारोपजनश्छान्दसः। यद्वा। अग्न्यादिसंप्रयोगात् तप्तजले भवाय। आतप्याय च। आतपे भवाय ॥ १४ ॥

नमो वात्याय च रेष्मियाय च इति ॥ १५ ॥

नमः वात्याय च रेष्मियाय च ॥ १५ ॥

सा० भा० वातेन सह वृष्टः वात्यः। रिष्यन्ति विनश्यन्ति भूतान्यत्रेति रेष्मः प्रलयकालस्तत्र भवः शर्करापाषाणादिसहितो वृष्टिजलविशेषो रेष्मियः ॥१५॥

भ० भा० भा० नमो वात्याय च। वातेन कृता वृष्टयो वात्याः तत्र भवाय। रेष्मियाय च। रिष्यन्ति विनश्यन्ति भृशं भूतानि यत्रेति रेष्मा युगान्तकाले पाषा-

णशर्करावर्षी संवर्तो नाम वातो वाति स रेष्मा । ग्रीष्मर्तुरिति केचित् । वातोद्भूताः पांसवो रेष्माण इत्यपरे । तत्र भवाय । इकारोपजनात्प्रागेवाद्युदात्तत्वम् ॥१५॥

नमो वास्तव्याय च वास्तुपाय च इति । १६ ॥

नमः वास्तव्याय च वास्तुपायेति वास्तुऽपाय च ॥१६॥

सा०भा० वस्तु धनं गवाश्वादिपदार्थरूपं तत्र तत्तत्कार्यरूपेणावस्थितो वास्तव्यः । गृहनिर्माणार्था भूमिर्वास्तु तत्पालको वास्तुपः ॥ १६ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

भ० भा० भा० नमो वास्तव्याय च । वस्तु धनगवाश्वादिरूपं तत्र तत्कार्यरूपतया स्थिताय । यद्वा । वास्तुनि भवाय । वास्तुपाय च । वास्तु पातीति । पातेः कः । वास्तुस्वामिने वा । यथा "नमो रुद्राय वास्तोष्पतये" इति ॥१६॥

अस्यानुवाकस्य पुरश्चरणम् । एकोपवासं कृत्वाष्टशतं जपेत् कृतपुरश्चरणो भवति । अनेन चातुर्वर्ण्यवश्यकामः अश्वत्थोदुम्बरवटप्लक्षसमिधो दधिमधुघृताक्ता जुहुयादयुतं तदा वश्याः स्युः । मेधाकामः कपिलाज्यं पञ्चसहस्रं जुहुयात् मेधावी जायते । पुष्टिकामोऽपूपैर्नवसहस्रं जुहुयात् । आरोग्यकामः खादिरीणां समिधां दधिमधुघृताक्तानां पञ्चसहस्रं जुहुयात् । रूपकामोऽयुतं चूतपल्लवान् दधिमधुघृताक्तान् जुहुयात् । श्रीकामः कान्तारे स्वाकारप्रमाणमग्निकुण्डं खनित्वा तत्र मथिताग्नौ श्वेतकमलानां दध्याद्यक्तानां पञ्चसहस्रं जुहुयात् साक्षाच्छ्रीरुपतिष्ठते । तस्याः प्रसादेन तदन्वयो यावद्भूस्तावद्वर्धते । कार्पासपटकामस्तु कार्पासबीजैर्मध्वक्तैरयुतं जुहुयात् । अनेन कार्पासपटा उपलभ्यन्ते । धेनुकामो गवां व्रजे ह्येतमनुवाकं जपन्प्रदक्षिणमयुतं कुर्यात् धेनुमाप्नोति । पुत्रकामः पलाशसमिधां दधिमधुघृताक्तानामयुतं जुहुयात् । वंशकरं पुत्रं लभते । आयुष्कामो दूर्वाणां घृताक्तानामयुतं प्रतिवर्षं जुहुयात् । शतायुर्भवति । विद्याकामोऽश्वत्थसमिधामाज्याक्तानां शतसहस्रं जुहुयात्सर्वविद्यापारगो भवति । राज्यकामः सौगन्धिकानां मध्वक्तानां पञ्चलक्षं जुहुयात् सम्राडभिजायते । अथ मुक्त्युपाय उच्यते । तत्रादौ चान्द्रायणं चरित्वा एतमनुवाकमेकविंशतिसहस्रं जपित्वा ततः परं पञ्चसहस्रान्तप्रदक्षिणं प्राणायामं कृत्वा ततः पश्चात्स्वाग्नौ शम्भुसमिधौ पालाशाश्वत्थसमिधां मधुघृताक्तानां लक्षत्रयं जुहुयात् । ततः शम्भुप्रसादान्मुक्तो भवति । अन्ये च तत्कुलजाता रौरवेऽपि पच्यमानाः शिवपुरे रमन्ते । यावदिन्द्रप-

ध्वकमतीतं भवति तत्कुलजाता यावदियं पृथिवी तावद्वर्धन्ते । ध्यानम् । जटाभिर्लम्बमानाभिर्नृत्यन्तमभयप्रदम् । देवं शुचिस्मितं ध्यायेद्व्याघ्रचर्मपरिष्कृतम्॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने सप्तमोऽनुवाकः ॥७॥

॥ इति सप्तमोऽनुवाकः ॥

---

सप्तमेऽनुवाके यान्यन्यतरतो नमस्काराणि यजूंष्युक्तानि तेभ्योऽन्यानि कानिचिदन्यतरतो नमस्काराणि अष्टमेऽनुवाके कथ्यन्ते ॥

## ॥ तत्र विद्यमानानि सप्तदश यजूंष्याह ॥

नमः सोमाय च रुद्राय च इति ॥ १ ॥

नमः सोमाय च रुद्राय च ॥ १ ॥

सा० भा० उमया सह वर्तत इति सोमः । रुत् रोदनहेतुः दुःखं तत् द्रावयति विनाशयतीति रुद्रः ॥ १ ॥

भ० भा० भा० नमः सोमायेत्यारभ्य यावत् नमो वः किरिकेभ्यः इत्येको मन्त्रः । अस्य ऋषिर्भगवानेव । छन्दो महानुष्टुप् । देवतापि भगवानेव । अत्र देवस्यानुग्रहरूपाणि प्रदर्श्यन्ते । रुद्रपशुपत्यादिशब्दानां पुनरभिधानं देवस्यानुग्राहकरूपतामपि प्रख्यापयितुम् । नमः सोमाय च । उमया सहितः सोमः तस्मै । प्रसादकाले हि देवः सोमः सन्निधत्ते । चन्द्रात्मने वा । तदात्मा हि देवः पितृदेवमनुष्यांस्तर्पयति । सोमयागात्मने वा । तेन हि रूपेण पुरुषानभ्युदये योजयति । एवमनवधारणात्समासपक्षेऽप्यनवग्रहोऽदोषः । यथाहुः । "व्युत्पत्त्यनवधारणान्नावगृह्यते" इति । रुद्राय च प्राणिनामन्तकाले रोदयित्रे । कृपया हि देवो महासंहारं करोति संसारखेदव्यपगमार्थम् । रुद् संसारदुःखं द्रावयतीति रुद्र इत्यादयोऽप्यर्थविशेषाः प्रागेवोक्ताः ॥ १ ॥

नमस्ताम्राय चारुणाय च इति ॥ २ ॥

नमः ताम्राय च अरुणाय च ॥ २ ॥

सा० भा० आदित्यरूपेण उदयकालेऽत्यन्तरक्तस्ताम्रः । उदयादूर्ध्वमीषद्रक्तोऽरुणः ॥ २ ॥

---

१ सोमायेत्यत्र पदपाठेऽवग्रहादर्शनात् समासासम्भवेन ईदृशविग्रहानुपपत्तिः । अतः सूतेऽसौ सोम इति विग्रहो युक्त इति भाति ।

भ० भा० भा० नमस्ताम्राय चारुणाय च । आदित्यविषयौ व्याख्यातौ। आदित्यात्मना हि देवः प्रबोधदानादिना जगदनुगृह्णाति । कर्माणि च जन्तूनां साक्षात्करोति ॥ २ ॥

नमः॑ श॒ङ्गाय॑ च पशु॒पत॑ये च इति ॥ ३ ॥

नमः॑ श॒ङ्गाय॑ च॒ प॒शु॒पत॑य॒ इति॑ पशुपत॑ये॒ च ॥ ३ ॥

सा० भा० शं सुखं गमयति प्रापयतीति शङ्गः। पशूनां पालयिता पशुपतिः॥३॥

भ० भा० भा० नमः शङ्गाय च । शं सुखं गमयतीति शङ्गः सुखायमानानां सुखयिता सुखस्यैवोत्पादयिता तस्मै नमः । अन्येष्वपि दृश्यत इति गमेर्डः । पशुपतये च । पशूनां स्वामिने । भयहेतुभ्यः पापरोगचोरादिभ्यो रक्षित्रे। परादिश्छन्दसि बहुलमित्युत्तरपदाद्युदात्तत्वम् ॥ ३ ॥

नम॑ उ॒ग्राय॑ च भी॒माय॑ च इति ॥ ४ ॥

नमः॑ उ॒ग्राय॑ च॒ भी॒माय॑ च॒ ॥ ४ ॥

सा० भा० विरोधिनो नाशयितुं क्रोधयुक्त उग्रः। दर्शनमात्रेण विरोधिनो भयहेतुर्भीमः ॥ ४ ॥

भ०भा०भा० नम उग्राय च । पापरोगादिभिर्नरकाद्यैश्च स्वयमनभिभवनीयाय येभ्यः पशून्पाति प्रसह्य वा तेषामभिभवित्रे । यजमानमूर्त्तेरधिष्ठाता चायम्। भीमाय च । तेषां पापरोगादीनामेव भयहेतवे । बिभेत्यस्मादिति भीमः । भियः षुग्वेति मन्प्रत्ययः। भीमादयोऽपादाने। येभ्यो जगद्बिभेति तेऽपि पापरोगादयस्त्वत्तो बिभ्यतीति भावः । अयं चाकाशमूर्तेरधिष्ठाता ॥ ४ ॥

नमो॑ अग्रेव॒धाय॑ च दूरेव॒धाय॑ च इति ॥ ५ ॥

नमः॑ अ॒ग्रे॒व॒धायेत्य॑ग्रेऽव॒धाय॑ च॒ दू॒रे॒व॒धायेति॑ दूरेऽव॒धाय॑ च॒ ॥ ५ ॥

सा०भा० अग्रे पुरतो वधोऽस्येत्यग्रेवधः । एवं दूरेवधः ॥ ५ ॥

भ० भा० भा० नमो अग्रेवधाय च ।अग्रे अभिमुखे स्थित्वा हन्तीति । पचाद्यच् । छान्दसो वधभावः। तत्पुरुषे कृति बहुलमिति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा । अग्रे पूर्वं जिघांसायामेव जिघांसूनां घातकाय । दूरेवधाय च । दूरेऽपि स्थितानां हन्त्रे दूरेऽपि काले दुरात्मनां हन्त्रे ॥ ५ ॥

नमो॑ ह॒न्त्रे च॒ हनी॑यसे च इति ॥ ६ ॥

नमः॑ ह॒न्त्रे च॒ हनी॑यसे च॒ ॥ ६ ॥

सा० भा० पुरतो दूरे वा वर्तमानं विरोधिनमनायासेनैव हन्तीत्यर्थः । लोकेऽपि यो यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता । अतएवेश्वरेणार्जुनं प्रत्युक्तम् । "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" इति । संहारकालेऽतिशयेन सर्वेषां हन्ता हनीयान् ॥ ६ ॥

भ० भा० भा० नमो हन्त्रे च । यो नाम कश्चिद्धन्ति तदात्मने किं बहुना सर्वोऽपि हन्ता त्वया बलेन हन्तीति भावः । हनीयसे च । अतिशयेन हन्त्रे यो नाम कश्चिद्धन्ति सोऽतिशय्यते । तुश्छन्दसीति हन्तृशब्दादीयसुन् । तुरिष्ठेमेयःस्विति तृल्लोपः । एवं विश्वातिशयितबलो येन भवानेव पशूनां पतिर्भवितुमर्हति ॥६॥

नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः इति ॥ ७ ॥

नमः॑ वृ॒क्षेभ्यः॑ हरि॑केशेभ्य॒ इति॒ हरि॑ऽके॒शे॒भ्य॒ः ॥ ७ ॥

सा० भा० हरितवर्णानि केशसदृशानि पर्णानि येषां ते हरिकेशास्तथाविधा ये वृक्षाः कल्पतरुप्रभृतयः तद्रूपोऽयं रुद्र इत्यर्थः ॥ ७ ॥

भ० भा० भा० नमो वृक्षेभ्यो हरिकेशेभ्यः । उभयतो नमस्कारेषु व्याख्यातौ । देवो हि स्वाभिमतेन येन केनचिदाकारेण वृक्षादिरूपेणाप्याविर्भूय जगदनुगृह्णातीति ॥ ७ ॥

नमः॑स्ता॒राय॑ इति ॥ ८ ॥

नमः॑ ता॒राय॑ ॥ ८ ॥

सा० भा० तारः प्रणवप्रतिपाद्यः ॥ ८ ॥

भ० भा० भा० नमस्ताराय । तारयति संसारसागरात् जन्तूनिति तारः । प्रणवाद्यच् । यथा जाबालोपनिषदि । "अत्र हि जन्तोः प्राणैरुत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे" इति तस्मै नमः । प्रणवरूपाय वा ॥ ८ ॥

नमः॑ श॒म्भवे॑ च मयो॒भवे॑ च इति ॥ ९ ॥

नमः॑ श॒म्भव॒ इति॑ शम्ऽभवे॑ च॒ म॒यो॒भव इति॑ मयःऽभवे॑ च॒ ॥ ९ ॥

सा० भा० शं सुखं भावयत्युत्पादयतीति वा शम्भुः। मयः सुखम् भावयतीति मयोभूः ॥ ९ ॥

भ०भा०भा० नमः शम्भवे च। शं सुखमस्माद्भवतीति शम्भुः सुखहेतुः। सुख-एव वा सर्वदा भवतीति शम्भुः। सुखैकरूपं सुखं भावयतीति वा शम्भुः। सुखप्रकारा-णां द्रष्टा। डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानमिति डुप्रत्ययः। मयोभवे च। मयोऽपि सुखमेव। ऐहिकामुष्मिकरूपेण वाभ्युदयनिःश्रेयसरूपेण वा भेदः। यद्वा दुःखशमनरूपं सुखं शमित्युच्यते। इतरत्तु मयमिति ॥ ९ ॥

नमः॑ शङ्क॒राय॑ च मयस्क॒राय॑ च इति ॥ १० ॥

नमः॑ श॒ङ्क॒राये॑ति॒ शम्ऽक॒राय॑ च॒ म॒य॒स्क॒राये॑ति॒ मयः॒ऽक॒-राय॑ च॒ ॥ १० ॥

सा० भा० एकं विषयसुखमपरं मोक्षसुखमिति तयोर्विवेकः। पित्रादिरूपेण शं लौकिकसुखं करोतीति शङ्करः। आचार्यशास्त्रादिरूपेण मोक्षसुखं करो-तीति मयस्करः। साक्षात्सुखकारित्वमेताभ्यां पदाभ्यामुक्तं एतन्मुखेन का-रयितृत्वं पूर्वाभ्यां पदाभ्यामिति विवेकः ॥ १० ॥

भ० भा० भा० नमः शङ्कराय च। सर्वप्राणिभ्यः शं सुखं ताच्छील्येन करो-तीति शङ्करः। कृञो हेतुताच्छील्यानुलोम्येष्विति टः। यद्वा शमिधातोः संज्ञाया-मित्यच्। शङ्करदेवो हि तच्छीलस्तत्संज्ञश्च। यथोक्तम्। शमिधातोः संज्ञाया-मिति धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थमिति। शमेव करोतीति वा शङ्करः। मयस्कराय च। मय उक्तम्। ताच्छील्येन तत्करोतीति मयस्करः। कृञो हे-त्विति टः। अतः कृकमीत्यादिना सत्वम् ॥ १० ॥

नमः॑ शि॒वाय॑ च शि॒वत॑राय च इति ॥ ११ ॥

नमः॑ शि॒वाय॑ च॒ शि॒वत॑रा॒ये॑ति॒ शि॒वऽत॒रा॒य च॒ ॥ ११ ॥

सा० भा० शिवः कल्याणरूपः। स्वयं निष्कल्मष इत्यर्थः। अतिशयेन शिवः शिवतरः ॥ ११ ॥

भ० भा० भा० नमः शिवाय च। शिवः अकल्मषो निस्त्रैगुण्यः। सर्वात्मना कल्याणः शिवः सुप्रसिद्धः तस्मै नमः। शिवतराय च। अभ्युदयनिःश्रेयसा-ख्यकल्याणकारिण्यपि शिवशब्दो गुणवृत्त्या वर्त्तते। यथा"शिवः पन्थाः शि-वोऽभ्युपायः"इति। तथा देवः शिवङ्करत्वाच्च शिव इति। यथाथर्वशिखायां"शि-व एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य"इति। महाभारते च। "समेधयति

यन्नित्यं सर्वार्थान् सर्वकर्मसु । शिवमिच्छन् मनुष्याणां तस्माद्देवः शिवः स्मृतः" इति । अतिशयेन शिवः शिवङ्करः शिवतरः । अविपर्ययेण वा शिवङ्करोति स शिवङ्करः । शिवतरः तस्मै नमः ॥ ११ ॥

नमस्तीर्थ्याय च कूल्याय च इति ॥ १२ ॥

नमः तीर्थ्याय च कूल्याय च ॥ १२ ॥

सा०भा० स्वभक्तानपि निष्कल्मषान् करोतीत्यर्थः । तीर्थे प्रयागादौ सन्निहितः तीर्थ्यः । कूले नदीतीरे प्रतिष्ठापितलिङ्गरूपेणावतिष्ठत इति कूल्यः ॥१२॥

म० भा० भा० इदानीमाधारविशेषवशेन देवो जगदनुगृह्णातीत्याह । नमस्तीर्थ्याय च । तीर्थं प्रयागादि तत्र भवाय । पूर्ववद्यत् प्रत्ययः स्वरश्च । कूल्याय च । कूलं कावेर्यादीनां तीरं तत्र भवाय ॥ १२ ॥

नमः पार्याय चावार्याय च इति ॥ १३ ॥

नमः पार्याय च अवार्याय च ॥ १३ ॥

सा०भा० पारे संसारसमुद्रस्य परतीरे मुमुक्षुभिर्ध्येयत्वेनावतिष्ठत इति पार्यः । अवारे अर्वाकृतीरे संसारमध्ये काम्यफलप्रदत्वेनावतिष्ठत इत्यवार्यः ॥ १३ ॥

म०भा०भा० नमः पार्याय च । नद्यादीनां पारं परतीरं तत्र भवाय । पूर्ववदाद्युदात्तत्वाभावः । अवार्याय च । अवारमर्वाक्तीरं तत्र भवाय । कश्चिदाह । "संसारविषयं तीर्थादिकम्" तीर्थस्थानीयाः समवायाः शैवादयः तीर्थानि तत्र भवाय । तत्र स्थित्वा जगदनुगृह्णातीति । कूलं कालादि तत्र भवाय । परतीरं विशुद्धं पारं तीरमविशुद्धमवारतीरमिति॥ १३ ॥

नमः प्रतरणाय चोत्तरणाय च इति ॥ १४ ॥

नमः प्रतरणायेति प्रऽतरणाय च उत्तरणायेत्युत्ऽतरणाय च ॥ १४ ॥

सा०भा० प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः । तत्त्वज्ञानरूपेण कृत्स्नसंसारोत्तरणहेतुरुत्तरणः ॥ १४ ॥

म०भा०भा० नमः प्रतरणाय च । तरणं प्लवनम् । उत्तमासु योनिषु जन्म प्रकर्षः । करणे ल्युट् । कृदुत्तरपदप्रकृतिस्वरत्वम् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वम् । संसारप्रतरणे प्लवरूपत्वम् । अस्मिन्संसारे प्रकर्षेण तरणहेतवे । उत्त-

रणाय च । अस्मात्संसाराद्उत्तरणहेतवे । निर्गमनहेतवे । प्रत्ययादि पूर्ववत् ॥ १४ ॥

नम आतार्याय चालाद्याय च इति ॥ १५ ॥

नमः आतार्यायेत्याऽतार्याय च आलाद्यायेत्याऽलाद्याय च ॥ १५ ॥

सा०भा० सम्भवत्यपि संसारोत्तरणहेतौ तत्त्वज्ञाने तदुपेक्ष्य काम्यकर्मानुष्ठाने संसारे पुनरागमनमातारस्तमर्हतीत्यातार्यः । अलं सम्पूर्णम् यथा भवति तथा कर्मफलमत्तीत्यलादो जीवः । "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति श्रुतेः । तस्य प्रेरकत्वेन तत्सम्बधित्वादालाद्यः ॥ १५ ॥

भ०भा०भा० नम आतार्याय च । संसारतीरं प्राप्यापि कर्मशेषेण पुनरावर्त्तनमातारः । अवे तॄस्त्रोर्घञ् । सर्वत्र बहुलवचनादाङ्यपि भवति । तत्र भवाय । अनुग्राहकतया तत्र स्थिताय । आलाद्याय च । आलादः सर्गः । भूयोभूयः संसारसागरे आवर्तरूपेण परिभ्रमणमालादः । लजलंजि भर्त्सने । वर्णव्यत्ययेन जकारस्य दकारः । लदिरेव वा प्रकृत्यन्तरम् तत्र भवाय । केचिदाहुः । आलादः स्वर्ग इति । स हि सुखान्तरं भर्त्सयतीति ॥ १५ ॥

नमः शष्प्याय च फेन्याय च इति ॥ १६ ॥

नमः शष्प्याय च फेन्याय च ॥ १६ ॥

सा०भा० शष्पं बालतृणं गङ्गातीरादावुत्पन्नम् कुशाङ्कुरादि तदर्हतीति शष्प्यः । नदीमध्यगतं फेनमर्हतीति फेन्यः ॥ १६ ॥

भ०भा०भा० नमः शष्प्याय च । शष्पं कुशदर्भादि पवित्रभूतं तत्र भवाय । फेन्याय च । फेने भवाय ॥ १६ ॥

नमः सिकत्याय च प्रवाह्याय च इति ॥ १७ ॥

नमः सिकत्याय च प्रवाह्यायेति प्रऽवाह्याय च ॥ १७ ॥

सा०भा० सिकतामर्हतीति सिकत्यः । प्रवाहमर्हतीति प्रवाह्यः ॥ १७ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये अष्टमोऽनुवाकः ॥ ८ ॥

---

१ क० छानेन ।

यः पुरुषः श्रद्धालुः सन् स्नानादितत्परो निरन्तरं गङ्गादितीरे वर्तते तद्रूप इति शष्प्यादिशब्दानां चतुर्णां तात्पर्यार्थः ॥

भ०भा०भा० नमः सिकत्याय च। सिकतासु भवाय। प्रवाह्याय च। प्रवाह नदीस्रोतसि भवाय ॥ १७ ॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने अष्टमोऽनुवाकः॥८॥

॥ इति अष्टमोऽनुवाकः ॥

---

अष्टमेऽनुवाके यान्यन्यतरतो नमस्काराणि यजूंष्युक्तानि तेभ्योऽप्यन्यानि कानिचित् नवमेऽनुवाके उच्यन्ते ॥

तत्र विद्यमानान्येकोनविंशतिसंख्याकानि यजूंष्याह ॥

नमं इरिण्याय च प्रपथ्याय च इति ॥ १ ॥

नमः इरिण्याय च प्रपथ्यायेति प्रऽपथ्याय च ॥ १ ॥

सा०भा० इरिणमूखरं[1] तत्र भवः इरिण्यः। प्रपथो बहुभिः सेवितो मार्गः तत्र भवः प्रपथ्यः ॥ १ ॥

भ०भा०भा० नम इरिण्याय च। इरिणमूषरं तत्र भवाय। प्रपथ्याय च। प्रहतः पन्थाः प्रपथः बहुभिः सेवितो मार्गः तत्र भवाय ॥ १ ॥

नमः किꣳशिलाय च क्षयणाय च इति ॥ २ ॥

नमः किꣳशिलाय च क्षयणाय च ॥ २ ॥

सा०भा० कुत्सिताः क्षुद्राः शिलाः यत्र प्रदेशे तादृशः शार्करिलः प्रदेशः किंशिलः। क्षयणो निवासयोग्यो देशः ॥ २ ॥

भ०भा०भा० नमः किꣳशिलाय च। कुत्सिताः क्षुद्राः शिलाः यत्र किंशिलः शार्करिलः प्रदेशः तत्स्थाय। तात्स्थ्यात्ताच्छब्द्यम्। यद्वा किंशिला उत स्फटिकादिकमिति यत्र सन्देहः स प्रदेशविशेषः किंशिलः तत्स्थाय। क्षयणाय च। क्षि निवासगत्योः। अधिकरणे ल्युट्। क्षयणो निवासयोग्यो देशः तत्स्थाय। पूर्ववदुपचारः। अन्य आह। संसारिविशेषाः सर्व एते शष्पादय इति। शष्पाः शष्पकल्पाः स्वल्पप्राणाः। फेनाः फेनकल्पाः स्वल्पायुषः। सिकताः

---

१ ग० मूषरं।

सिकताकल्पा अतिक्षुद्राः। प्रवाहाः प्रकृष्टवाहा महाविभूतयः। इरिणाः। इरिणकल्पाः शून्यशक्तयः। प्रपथाः प्रकृष्टमार्गवर्त्तिनः। किंशिलाः। कुत्सितशीलाः। छान्दसं ह्रस्वत्वम्। क्षयणाः क्षयशीलाः। तेषु सर्वेष्वविशेषेणानुग्राहकतया वर्त्तते। सर्वानुग्राहकत्वादिति भावः॥ २॥

नमः॑ कप॒र्दिने॑ च पु॒ल॒स्तये॑ च इति॥ ३॥

नमः॑ क॒प॒र्दिने॑ च॒ पु॒ल॒स्तये॑ च॒॥ ३॥

सा० भा० कपर्दी जटाबन्धवान्[1]। भक्तानां पुरतस्तिष्ठतीति पुलस्तिः॥ ३॥

भ० भा० भा०नमः कपर्दिने च। गतम्। पुलस्तये च पुलस्तयः कुन्तलाः तद्वते। मत्वर्थीयो लुप्यते। प्रसादकाले कदाचित्कपर्दी कदाचित्कुन्तलवान् देव आगच्छतीति केचिदाहुः। सर्वदा सर्वेषां पुरस्तिष्ठतीति पुलस्तिः। पुलस्तिरिति पृषोदरादित्वाद्रूपसिद्धिः। एवं महानुभावोऽपि सर्वदा सुलभ एवेति दर्शितम्॥ ३॥

नमो॒ गोष्ठ्या॑य च॒ गृह्या॑य च इति॥ ४॥

नमः॑ गो॒ष्ठ्यायेति॒ गोऽस्थाय॑ च॒ गृह्या॑य च॒॥ ४॥

सा० भा०गवां स्थानं गोष्ठं तत्र भवो गोष्ठ्यः। गृहे भवो गृह्यः॥ ४॥

भ० भा०भा० भगवति तामेव सुलभतां प्रपञ्चयितुमाह। नमो गोष्ठ्याय च। गवां स्थानं गोष्ठम्। गावस्तिष्ठन्त्यस्मिन्निति। सुपि स्थ इति कः। अम्बाम्बगो इति मूर्द्धन्यः। तत्र भवाय। गृह्याय च गृहे भवाय॥ ४॥

नम॒स्तल्प्या॑य च॒ गेह्या॑य च इति॥ ५॥

नमः॑ तल्प्याय च॒ गेह्या॑य च॒॥ ५॥

सा० भा० तल्पे खट्वायां शयानस्तल्प्यः। गेहे प्रासादे भवो गेह्यः॥ ५॥

भ० भा० भा० नमस्तल्प्याय च। तल्पं खट्वादि तत्र भवाय। गेह्याय च। गेहं प्रासादादि तत्र भवाय॥ ५॥

नमः॑ का॒व्या॑य च गव्हरेष्ठाय॑ च इति॥ ६॥

नमः॑ का॒व्या॑य च॒ ग॒व्ह॒रे॒ष्ठायेतिं गव्हरेऽस्थाय॑ च॒॥ ६॥

---

1 ग० स० जटाजूटवान्।

सा०भा०कुत्सितमटतीति । कटं कण्टकितलतादि तत्पूर्णतया दुःप्रवेशत्वं प्राप्नोतीति वा दुर्गमरण्यविशेषः काटस्तत्र भवः काट्यः । गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः ॥ ६ ॥

भ० भा० भा० नमः काट्याय च । व्याख्यातमेतत् । कूपस्थजलरूपेण वा जगदनुगृह्णाति । गह्वरेष्ठाय च । गिरिगह्वरादिषु स्थिताय । पूर्ववत्कः । तत्पुरुषे कृतिबहुलमित्यलुक् । सुषामादित्वात् षत्वम् ॥ ६ ॥

नमो ह्रदय्याय च निवेष्प्याय च इति ॥ ७ ॥

नमः ह्रदय्याय च निवेष्प्यायेति निऽवेष्प्याय च ॥ ७ ॥

सा० भा०ह्रदेषु अगाधजलेषु भवो ह्रदय्यः । निवेष्पं नीहारजलं तत्र भवो निवेष्प्यः ॥ ७ ॥

भ० भा० भा० नमो ह्रदय्याय च । ह्रदे भवाय । पूर्ववद्यत् । ह्रदय्या उपसंख्यानमिति वचनात् यादेशः । निवेष्प्याय च । निवेष्पं अवश्यायोदकम् । विष्लृ व्याप्तौ औणादिकः पप्रत्ययः । तत्र भवाय ॥ ७ ॥

नमः पाꣳसव्याय च रजस्याय च इति ॥ ८ ॥

नमः पाꣳसव्याय च रजस्याय च ॥ ८ ॥

सा० भा०पांसुषु परमाणुषु अवस्थितः पांसव्यः । रजसि विस्पष्टायां धूल्यामवस्थितो रजस्यः ॥ ८ ॥

भ० भा० भा० नमः पाꣳसव्याय च । पांसुषु सूक्ष्मरेणुषु भवाय । रजस्याय च । विपरीतेषु स्थूलरेणुषु भवाय । गुणवचनो वा रजःशब्दः लोकवचनो वा । "यदस्य पारे रजसः" इति ॥ ८ ॥

नमः शुष्क्याय च हरित्याय च इति ॥ ९ ॥

नमः शुष्क्याय च हरित्याय च ॥ ९ ॥

सा० भा०शुष्केषु काष्ठेषु भवः शुष्क्यः । हरितमार्द्रं तत्र भवः हरित्यः ॥ ९ ॥

भ० भा० भा०नमः शुष्क्याय च । शुष्कं नीरसं तत्र भवाय । हरित्याय । हरितमार्द्रं तत्र भवाय ॥ ९ ॥

नमो लोप्याय चोलप्याय च इति ॥ १० ॥

---

१ ख० ग० घ० ङ० अटति कण्टकितलतादिपूर्णतया दुःप्रवेशत्वं प्राप्नोतीति दुर्गमा ।

नमः॑ लोप्या॑य च उलप्या॑य च ॥ १० ॥

सा० भा०लुप्यते तृणादिकं यस्मिन्निति लोपः कठिनप्रदेशः तत्र भवो लोप्यः। उलपा बल्वजातृणादयस्तत्र भवः उलप्यः ॥ १० ॥

भ० भा० भा० नमो लोप्याय च । लुप्यते तृणादिकमस्मिन्निति लोपः। कठिनप्रदेशः। तत्र भवाय। उलप्याय च। उलपा बल्वजास्तृणादयः। तत्र भवाय। तद्वति वा देशे भवाय ॥ १० ॥

नम॑ ऊर्व्या॑य च सूर्म्या॑य च इति ॥ ११ ॥

नमः॑ ऊर्व्या॑य च सूर्म्या॑य च ॥ ११ ॥

सा०भा० ऊर्व्यां पृथिव्यां भव ऊर्व्यः। शोभना ऊर्मयो यस्यां नद्यां सेयं सूर्मिः तत्र भवः सूर्म्यः ॥ ११ ॥

भ० भा० भा० नम ऊर्व्याय च । उर्व्यां पृथिव्यां भवाय। छान्दसं दीर्घत्वम्। भूतलमात्रं गृह्यते। सूर्म्याय च। सूर्मिरन्तःसुषिरा प्रतिकृतिः। सूर्म्यं सुषिरामिवेति दर्शनात्। तत्र भवाय। 'सूर्मिं ज्वलन्तीं वा श्लिष्येदिति' वचनात्॥११॥

नमः॑ पर्ण्या॑य च पर्णशद्या॑य च इति ॥ १२ ॥

नमः॑ पर्ण्या॑य च पर्णशद्या॑येति पर्णऽशद्या॑यं च ॥ १२ ॥

सा०भा०पर्णेषु पत्रेषु भवः पर्ण्यः । शुष्काणां पर्णानां संघातः पर्णशदस्तत्र भवः पर्णशद्यः ॥ १२ ॥

भ० भा० भा० नमः पर्ण्याय च । पर्णेषु पत्रेषु भवाय । एतेषूर्व्यादिषु त्रिष्वपि पूर्ववदाद्युदात्तत्वाभावः । पर्णशद्याय च। शुष्काणां पर्णानां संघातः पर्णशदः तत्र भवाय । एवं नाम सुलभोऽसीति । एवमनुग्रहप्रकारा देवस्योक्ताः॥ १२ ॥

नमो॑ऽपगुरमा॑णाय चाभिघ्नते च॑ इति ॥ १३ ॥

नमः॑ अपगुरमा॑णायेत्य॑पगुरमा॑णाय च आभिघ्नत इत्य॑भिऽघ्नते च ॥ १३ ॥

सा० भा० अपगुरमाणः उद्यतायुधः । अभिघ्नन् प्रहरन् ॥ १३ ॥

भ० भा० भा० अथ निग्राह्येषु दुरात्मसु कथं देव आचरतीत्याह । नमोऽपगुरमाणाय च। आयुधमुद्यच्छमानाय। निग्राह्यान्हन्तुम्। गुरी उद्यमने कुदुत्तरपद-

प्रकृतिस्वरत्वम् । लसार्वधातुकानुदात्तत्वे विकरणस्योदात्तत्वम् । अभिघ्नते च । अपगूर्य हन्तव्यानाभिमुख्येन हिंसते । शतुरनुम इति विभक्तेरुदात्तत्वम् ॥ १३ ॥

नम॑ आख्खिदते च॑ प्रख्खिदते च॑ इति ॥ १४ ॥

नमः॑ आख्खिदत इत्याऽखिदते च प्रख्खिदत इति॑ प्रऽखिदते च ॥ १४ ॥

सा० भा० आख्खिदन् ईषत् खेदयन् । प्रख्खिदन् अत्यन्तं खेदयन् ॥ १४ ॥

भ० भा० भा० नम आख्खिदते च । अभिपीडनेन कांश्चिदीषत्खेदयते । प्रख्खिदते च । कांश्चित्प्रकर्षेण खेदयते । यथापराधम् । खिद् परिघाते उदात्तेत्तौदादिकः । परिघातः परितोदः । उभयत्रापि छान्दसो वर्णोपजनः । प्रातिशाख्ये चोक्तम् । "उपसर्गपाथ एषः" इत्यादि । शतुरनुम इति विभक्तेरुदात्तत्वम् । एवं निग्राह्याभिगृह्णातीति ॥ १४ ॥

अथास्य मन्त्रस्य पुरश्चरणादिकं ब्रूमः । कृच्छ्रद्वयं चरित्वादौ पञ्चशतं जपेत्कृतपुरश्चरणो भवति । पूर्वं राज्ञामुच्यते । राजा यदा साम्राज्यमिच्छति तदा वक्ष्यमाणं कुर्यात् । कालो वसन्तः देशो गिरिः शर्वालयः कान्तारं वा तत्रालये वा देवस्य सन्निधौ ब्राह्मणैः कार्यसिद्धिं वाचयित्वा तान्संपूज्य प्रारम्भः । आर्द्रायाममावास्यायां वा तयोरन्यतरस्याम् प्रारम्भः । ब्राह्मणान्मन्त्रसिद्धान् गृह्णीयात् । यद्वा । आचार्यः सद्यः कर्मसिद्धिं कुर्यात् । आचार्य इति कल्पवित्सिद्ध उच्यते । स यथा वदेत् तथा सिद्धिर्भवति । तत्र सद्यः सिद्धिरुच्यते । ब्राह्मणास्तस्मादाचार्यात्संशुद्धान्मन्त्रमादाय पञ्चदश दिनानि निरन्तरं जपेयुः ततः कर्मयोग्या भवन्ति । एवं सिद्धैर्होमः कार्यः । प्रतिनमस्कारमाहुतिप्रक्षेपः । होमद्रव्याणि । तिलव्रीहियवादयः साज्याः । होमकाला उच्यन्ते । उदयात्प्रभृत्यास्तमयमनवरतमेकादशद्विजैस्त्रिंशद्दिनानि कारयेदेवम् । होमकर्तृभ्य उत्तरीयादयो पात्रेण दातव्याः । आचार्यस्यापि कुण्डलादयः । होमाग्नेरुपरि सर्पिःपात्रं सदास्रोतो भवेदणुधारमेवं कर्म यावत्समाप्यते तावद्देवस्यापि प्रतिदिनं अष्टसहस्रं भोजनं कार्यम् । ब्राह्मणानपि तावतः प्रतिदिनं भोजयेदन्त्यदिने नित्याद्द्विगुणम् आचार्यो भगवानेवेति मन्तव्यम् । आचार्यस्य सारभूता भूमिर्दातव्या । ऋत्विजां शतं शतं निष्कास्तदर्धार्धं वा दक्षिणा दातव्या । तद्द्विगुणमाचार्यायेति । तत्र शिवपूजायां गन्धः कर्पूरमिश्रितः । कमलानि पुष्पाणि । धूपः कर्पूरमिश्रितो गुग्गुलुः । दीपो गव्याज्य इति । नैवेद्यं तूक्तम् । एवं रुद्राराधनं प्रतिसंवत्सरं कार्यम् ।

एवमाराधनाद्राजा सम्राट् भवेत् । राजानो ये सागरमध्यस्थास्ते रुद्ररूपैर्ह-न्यमाना भवन्ति । इह सर्वां भुवं भुक्त्वान्ते रुद्ररूपैरनुगृह्यमाणः शिवपुरं व्रजेत् । तत्र रुद्ररूपी भूत्वा कल्पायुतं शिवपुरे भोगान् भुक्त्वा सप्तद्वीपाधिपती राजा शिवभक्तो जायते । तस्य करयोः पिनाकाङ्को भवति । तेनाङ्केन रुद्राराधनकारीत्यवगन्तव्यम् । अन्यस्यापि यस्य राज्ञो हस्तयोरङ्को भवति सोऽपि रुद्राराधनकारीति मन्तव्यः । एवमेकादशब्राह्मणैः प्रतिसंवत्सरं रुद्राराधनं कर्त्तव्यम् । अत्रैवापरमुच्यते । राजा शत्रुनाशकामः । अतिशक्तेन ब्राह्मणेन कारयेत् । शत्रुं राजानं महाखदिररूपिणं कृत्वा कस्मिंश्चिद्विविक्ते देशे जलपूर्णकुम्भे देवतामावाह्य तत्सन्निधावग्निमाधाय शमीसमिद्भिः सकण्टकाभिः रुधिराक्ताभिः शतसहस्रं जुहुयात् । रुधिरं च बैडालं प्रशस्तं भवति । ततस्तद्रूपं प्रत्यङ्गं लोहशङ्कुभिः प्रतिनमस्कारं खानयित्वा तदुपरि राजा स्वपादं विन्यसेत् । विन्यासकाले गुरुर्जपेत् । ततो राजा ब्राह्मणानां शतं भोजयेत्ततो देवं विसर्जयेत् । एवं कृते परराजा संवत्सरत्रयान्नष्टो भवति । अन्यच्च तदेव रूपं सशृङ्खलं कृत्वा पूर्ववद्धोमः । ततो राजा चिराच्छृङ्खली राजवश्यत्वं व्रजेत् । अन्यदपि वक्ष्यते । शत्रुराजनगरे कृत्रिमवेषधारिणो राजपुरुषाः सब्राह्मणाः सिद्धाः प्रविश्य चतुष्पथेषु चैत्येषु देवालयेषु राजसभासु राजद्वारे च लोहशङ्कूनपि तांश्छतसहस्राभिमन्त्रितान्कृत्वा गुप्ता न्यसेयुः । ततो भस्माभिमन्त्रितं सर्वतो विकिरेयुः । जलमपि विकिरेयुः । एवं कृते तत्पुरमासंवत्सरत्रयान्नष्टं भवति । तत्र खदिरबदर्यादयो वनस्पतयो रोहन्ति । ततो विकृतवेषाः परराजपुरजलाशयेषु कण्ठप्रमाणे जले तपः कुर्वन्तः सूर्याभिमुखाः अष्टशतदिनानि प्रतिदिनमष्टशतगुणं जपेयुः । जपकाले भगवतो हालाहलमेव कराभ्यामभिमन्त्रयेयुः । एवं कृते तज्जलपायिनो वाहनादयो विषदष्टा इव नश्यन्ति । एवं कुर्वन्तो विद्वांसो गुप्तमेव कुर्युः । प्रत्यक्षेण राजभयं सद्यो जायते । अत एव गुप्तमेव कार्यमिति । एषां कर्तॄणां राज्यार्धसमा दक्षिणा स्यादिति । ततः ध्यानम् । पिनाकपाणिं भूतेशमुद्यत्सूर्यायुतद्युतिम् । भूषितं भुजगैर्ध्यायेत् कण्ठे कालं कपर्दिनम् ॥

**नमो॑ वः किरि॒केभ्यो॑ दे॒वाना॒ꣳ हृद॑येभ्यः इति ॥ १५ ॥**

**नमः॑ वः॒ कि॒रि॒केभ्यः॑ दे॒वाना॑म् हृद॑येभ्यः ॥ १५ ॥**

सा०भा० किरन्ति भक्तेभ्यो धनानीति किरिकाः उदाराः रुद्रावताराः । ते च देवानां हृदयभूताः । सर्वदेवप्रियत्वात् । तादृशेभ्यो वो युष्मभ्यं नमः ॥१५॥

भ०भा०भा० अथ नमो वः किरिकेभ्य इत्यारभ्यानुवाकान्तमेको मन्त्रः । अस्य मन्त्रस्य ऋषिर्देवता च भगवांच्छम्भुरेव । जगती षट्पदा छन्दः । अयं च मन्त्रः प्रत्यक्षकृतः । युष्मच्छब्दप्रयोगात् । एवं देवस्य लीलाविग्रहमूर्त्याधारगुणक्रियाजात्याकृतिभेदभिन्नाः । प्रत्येकं प्रतिनमस्कृताः । इदानीं तु समूहरूपेण नमस्क्रियन्ते । देवं नमस्कृत्येदानीं तदनुचरा नमस्क्रियन्त इति केचित् । प्रसिद्धवेषाकारा देवस्य नमस्कृताः । अज्ञातस्वभावा अन्ये जगतां शासितारो गुप्ता वर्त्तन्ते ते इदानीं नमस्क्रियन्त इत्यपरे । इयांस्तु पक्षः साधिष्ठः । अज्ञातविषयः । प्रागेव एक उपपन्नतरो भवति । उक्तम् । देवानां हृदयेभ्य इति देवानामेव हृदयवर्तनं वयं जानीम इति नमस्कारयोगाद्धि सर्वेषामेतद्विशेषणम् । अन्ये उक्तव्यतिरिक्ता जगतां शासितारः । किरिकादिस्वभावाः यान् देवादय एव जानन्ति न मनुष्यादयः । तेभ्यो युष्मभ्यमपि नमोऽस्तु । यूयं च प्रसीदत । आयुधानि चोपसंहरतेत्यर्थः ॥

नमो वः किरिकेभ्यः । किरतिर्हिंसाकर्मा किरन्ति स्वेच्छया लोकानिति किरयः । कृमृहरुहिभ्य इच्छन्दसीति किप्रत्ययः । किदिति हितश्चानुवर्त्तते । अज्ञातार्थे प्रागिवात्कः करोतेर्वा अच इरिति इप्रत्ययः गुणे कृते छान्दसमुपधाया इत्वम् । कुर्वन्ति उत्पादयन्ति स्वेच्छया लोकानिति किरयः । त एव किरिकाः । देवाना ९ हृदयेभ्यः । देवानामेव हृदये परिवर्त्तमानेभ्यः । तात्स्थ्यात्ताच्छब्द्यम् । देवा एव युष्मान् जानन्ति । यद्वा देवानां हृदये अनुग्रहायाविर्भवद्भ्यः । स्वाभिमतसिद्धये तैः सदा स्मर्यमाणेभ्य इति यावत् । यद्वा । देवानां हृदयभूतेभ्यः तेषां विशेषेणाप्ततमेभ्यः । देवाश्च पृथिव्यन्तरिक्षद्योस्था अग्निवायुसूर्याः सविभूतयः एकादश । एकादश यथा । "ये देवासो दिव्येकादशस्थ" इत्यादि । ततस्त्रिषु लोकेषु त्रयस्त्रिंशद्भवन्ति । तेषामेकस्य विभूतिभूताः शतं देवास्तेषां च त्रयस्त्रिंशत्संख्यास्त्रयो गुणा अग्निवायुसूर्यप्रधानास्ते संभूय एकोनशतं भवन्ति । एकशततमो गणस्य प्रधानभूत एवं पृथिव्यां एकादशप्रधानभूतास्ते च त्रयस्त्रयः क्रियमाणास्त्रयस्त्रिंशद्भवन्ति । ते च त्रयस्त्रिंशत्संख्यास्त्रयस्त्रिंशद्भवन्ति गणाः गणाधिपश्चैकादशः । उक्तं च "त्रयो देवा एकादश त्रयस्त्रिंशाः सुराधसः" इत्यादि । एता एव ता देवता अग्नेर्विभूतयः वायुसूर्यविशेषौ चाग्न्यनुविधायिनौ द्वौ । एवं सर्वे संभूय एकोनचत्वारिंशत्सहितं शताधिकं सहस्रम् । तावन्तोऽन्तरिक्षस्था वायुविभूतयो देवास्तत्र त्वग्निसूर्यविशेषौ द्वौ सूर्यानुविधायिनौ द्वौ । एवं सर्वे सम्भूयैकोनचत्वारिंशत्सहितं शतत्रयाधिकं सहस्रत्रयं देवा भवन्ति । श्रूयते च । "त्रीणी शता त्रिसहस्राण्यग्निं त्रिंशच्च देवानवचासपर्यन्" इति । सर्वेऽपि चैते

नानावेषाधिकारा इष्टापूर्तभागधेया महतो भूतस्य विस्फुलिङ्गाः। इयमेकस्मिन्ब्रह्माण्डे प्रक्रिया। अनन्ताश्चैवंविधा ब्रह्माण्डपिण्डिका इत्यलमतिप्रसङ्गेन॥१५॥

नमो विक्षीणकेभ्यः इति ॥ १६ ॥

नमः विक्षीणकेभ्य इति विऽक्षीणकेभ्यः ॥ १६ ॥

सा०भा० क्षीणेभ्यो विपरीता विक्षीणकाः कदाचिदपि क्षयरहिता इत्यर्थः॥१६॥

भ०भा०भा० नमो विक्षीणकेभ्यः। अभक्तानां व्याधिचोरनरकादिभिर्विचित्रां हिंसां प्राणिनां कुर्वद्भ्यः। क्षिणु हिंसायां उदात्तस्वरितेत्तौदादिकः विविधं क्षिण्वन्तीति विक्षीणकाः इगुपधज्ञाप्रीकिरः कः। तदन्तात् पूर्ववत्प्रागिवीयः कः। धातोरिकारस्य छान्दसं दीर्घत्वम्। अपर आह। क्षीष् हिंसायां क्र्यादिकः. ततः शत्रन्तात्पूर्ववत्प्रागिवीयः कः। विविधं क्षीणन्त्यज्ञाता इति ते विक्षीणकाः। छान्दसी रूपसिद्धिः। विक्षीणकेभ्य इति यावत्। तथैव वाजसनेयिनः पठन्ति ॥ १६ ॥

नमो विचिन्वत्केभ्यः इति ॥ १७ ॥

नमः विचिन्वत्केभ्य इति विऽचिन्वत्केभ्यः ॥ १७ ॥

सा०भा० विचिन्वन्ति अपेक्षितमर्थं सम्पादयन्तीति विचिन्वत्काः ॥ १७ ॥

भ०भा०भा० नमो विचिन्वत्केभ्यः। इमे सुकृतिन इमे दुष्कृतिन इति निग्रहीतुमनुग्रहीतुं च ये जन्तून्विचिन्वन्ति ते विचिन्वत्कास्तेभ्यः। पूर्ववत्कः ॥१७॥

नम आनिर्हतेभ्यः इति ॥ १८ ॥

नमः आनिर्हतेभ्य इत्यानिःऽहतेभ्यः ॥ १८ ॥

सा०भा० आसमन्तान्निःशेषेण हतं पापं यैस्ते आनिर्हताः ॥ १८ ॥

भ०भा०भा० नम आनिर्हतेभ्यः। हननं हतं हिंसा। आकारो मर्यादायाम्। निरिति निश्चये। यन्मर्यादया क्रियते यच्च निश्चितमेव क्रियते तदानिर्हतं तद्वद्भ्यः। अर्श आदित्वादच्। न वा न्यायेन कुर्वन्ति न चापराधिषूदासत इति। यद्वा व्यत्ययेन कर्त्तरि निष्ठा। मर्यादया निश्चयेन हन्तृभ्य इत्यर्थः। कृदुत्तरपदप्रकृतिस्वरत्वम्। अपरे तु ब्रुवते। हन्तेर्गतिवृत्तेरियं कर्मणि निष्ठा। मर्यादया निर्गमिता आनिर्हता इति। सहयजनसंकीर्त्तनाद्यनौचित्यभयाद्देवतान्तरेभ्यः पृथक्कृता इत्यर्थः। मन्त्रान्तरं च भवति "मा त्वा रुद्र चुक्रुधा मा नमोभिर्मा दुष्टु-

ती वृषभ मा सहूती"इति । ब्राह्मणं च भवति। "स्वायामेव दिशि रुद्रं निरवदयत"इति । यद्येवं गतिरनन्तर इति पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति । मवृद्धादीनां चेत्युत्तरपदान्तोदात्तत्वं भविष्यतीत्यदोषः ॥ १८ ॥

नम आमीवत्केभ्यः इति ॥१९॥

नमः आमीवत्केभ्य इत्याऽमीवत्केभ्यः ॥ १९ ॥

सा॰भा॰आसमन्तान्मीवन्ति स्थूलीभावं प्राप्नुवन्तीत्यामीवत्काः । अत्र विक्षीणकविचिन्वत्कानिर्हतामीवत्केषु देवानाꣳहृदयेभ्य इत्यनुषज्यते ॥ १९ ॥

पञ्चमानुवाकमारभ्य नवमान्तेष्वनुवाकेषु अन्यतरतो नमस्काराणि बहूनि यजूंष्यभिहितानि । तैः सर्वैः परमेश्वरस्य सार्वात्म्यं प्रतिपादयितुमेकैकेन यजुषा स्थावरं जङ्गमं च एकैकं रूपमभिहितम् । अनुवाकभेदस्तु क्रतोर्बहिः प्रयोगे मन्त्रभेदाभिप्रायेण द्रष्टव्यः । एकैकोऽनुवाकः एकैको मन्त्रः । तत्र तस्य पुरश्चरणादिप्रकारस्तु रुद्रकल्पेऽभिधास्यते ।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये नवमोऽनुवाकः ॥ ९ ॥

भ॰ भा॰ भा॰ नम आमीवत्केभ्यः । समन्ताद्विजृम्भमाणेभ्यः । मीव स्थौल्ये उदात्तेत् भौवादिकः । ततः शत्रन्तात्पूर्ववत्कः । अन्ये ब्रुवते समन्ताद्धिंसद्भ्य इति । इतरेतरव्यावृत्तौ न कश्चिदवकाशः यतो* दूरात्मनोऽपसर्पेयुरिति भावः । मीञ् हिंसायां उदात्तेत् क्रैयादिकः ततः शत्रन्तात्पूर्ववत्कः । वर्णव्यत्ययेन मकारस्य वकारः मीनातेर्निगम इति ह्रस्वत्वं व्यत्ययेन न क्रियते । एवंविधेभ्यो युष्मभ्यं नमोऽस्तु इति ॥ १९ ॥

अथास्य मन्त्रस्य पुरश्चरणम् । पराकं चरित्वा चत्वारिंशत्सहस्रं जपेत् कृतपुरश्चरणो भवति । मन्त्रशोधनार्थं गुरुसन्निधावष्टसहस्रं जपेत् । ततः कर्मयोग्यो भवति । अनेन मन्त्रेण दुःसाध्यं किंचिन्न विद्यते मन्त्रप्रभावात्सर्वं सम्पद्यते। अनेन काम्यं कर्मोच्यते । देवस्य दक्षिणामूर्तेः सन्निधौ आत्माग्नौ मथिताग्नौ वा लाजतिलानां लक्षं जुहुयात् सुवर्णमुत्पद्यते। अपामार्गवेणुबीजयवानां दधिमधुघृताक्तानामयुतं जुहुयात् । स्वर्णसहस्रमुत्पद्यते । कन्याकामो गुग्गुलेन स्वेष्टकन्यासमाकृतिं कृत्वा तामुपलभ्य पञ्चसहस्रं जप्त्वा ततस्तां छित्त्वा षट्सहस्रं जुहुयात् । सर्वाभरणभूषितां इष्टां कन्यां लभते । पद्मोत्पलकुमुदानां लक्षं जुहुयात् । तस्य राजलक्ष्मीः प्रत्यक्षा भवति । पालाशाङ्कुराणां पयोक्तानां लक्षं

* यतोऽदूरात्मन इति भाति ।

जुहुयात् । यक्षराक्षसभूतप्रेतपिशाचादयो दृश्यानुवश्याश्च भवन्ति । महाकान्तारभूतलेऽग्निकुण्डं विधाय मथिताग्नौ बिल्वफलानामयुतं जुहुयात् । पत्राणां मुष्टिमात्राणां घृताक्तानां पञ्चसहस्रं जुहुयात् । बिल्वफलाकारं सुवर्णमुत्पद्यते । स्पर्शवेधी पिण्डो भवेत् । सार्वभौमसुतार्थी देवस्योपरि शुभ्राणि कमलानि गव्याज्याक्तानि लक्षं जुहुयात् । सार्वभौमः पुत्र उत्पद्यते । शमीसमिधामग्रं नतं कृत्वा रजतपात्रे निधाय दधिमधुघृताक्तानामयुतं जुहुयात् । शिवभक्तं पुत्रं लभते । श्वेतवचार्धफलचूर्णं रौप्यपात्रे निधाय कापिलेन सर्पिषालोड्यायुताभिमन्त्रितं कृत्वा सेवेत । स्वयं कविर्भवति । उदुम्बरसमिधां दधिमधुघृताक्तानामयुतं जुहुयात् । महाभोग्यभिजायते । मनोजवमिच्छन् जागरणं कुर्यात् । पुरश्चरणमपि विशेषेण भवति । सांवत्सरिकं कृच्छ्रं चरित्वात्मानं संशोध्य ततोऽष्टादशदिनानि चरुशाकमूलफलाहारी निरन्तरं जपेत् । अन्तरा बुद्धिपूर्वं स्वप्नो न स्यादबुद्धिपूर्वं तु स्वप्ने स्नात्वा जपेत् । ततस्तदन्ते मन्त्रानुवशार्थं गुरवे स्वर्णनिष्कपञ्चकं दद्यात् । पश्चात्पञ्चाशत्सहस्रं गुरुसन्निधौ देवसन्निधौ वा जपेत् । ततः साक्षादुमापती रुद्रः प्रत्यक्षो भवति । तत्प्रसादात्स्वयं मनोजवी भवति । यं यं देशमभिकामयते तं तं देशं गुरुं च स्मृत्वा मन्त्रमष्टशतमावर्त्तयेत् । तद्देशगामी भवति । एवं मनोजवप्रकार उक्तः । ततोऽदृश्यप्रकार उच्यते । अत्रापि पूर्ववत्पुरश्चरणमदृश्यावश्यकाले लोहितं चन्दनं कपिलापयसा संक्लिद्य तत्क्षोदमश्वत्थपत्रे निधाय संस्पृश्याष्टसहस्रं जपेत् । ततस्तेनात्मानमुपलिप्य देवं स्पृष्ट्वा स्मृत्वा प्राणायामं धारयेत् । ततः केनचिददृश्यो भवति । राजवश्यकामो लोहितचन्दनक्षोदमयुताभिमन्त्रितं कृत्वा तन्तुवेष्टितां गुलिकां कृत्वा नित्यवद्राजगृहप्रवेशे स्वललाटे धारयित्वा प्रविशेत् । राजा राजपुरुषाश्च वश्या भवन्ति । यं यं नाशयितुमिच्छेत् तस्य तस्य नामग्रहणपूर्वकमयुतमेकपादो भूत्वा देवस्य सन्निधौ जपेत् । संवत्सरान्नश्यति । देवस्य दक्षिणामूर्तेः सन्निधौ नित्यमष्टशतं जपेत् । राजपुरुषेभ्यो भयं न विद्यते । ध्यानम् । विश्वतः पाणिपादाब्जं विश्वतोऽक्षिशिरोमुखम् । ज्वलन्तं विश्वमावृत्य तेजोराशिं शिवं स्मरेत् ॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने नवमोऽनुवाकः ॥९॥

॥ इति नवमोऽनुवाकः ॥

सा० द्वितीयमारभ्य नवमान्तेष्वनुवाकेषु विविधानि यजूंष्युभयतो नमस्काराणि अन्यतरतो नमस्काराणि चोक्तानि। अथ दशमेऽनुवाके ऋग्रूपा मन्त्रा उच्यन्ते॥

॥ तत्र प्रथमामृचमाह ॥

द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किंचनाममत् इति ॥ १ ॥

द्रापे अन्धसः पते दरिद्रत् नीललोहितेति नीलऽलोहित । एषाम् पुरुषाणाम् एषाम् पशूनाम् मा भेः मा अरः मो इति एषाम् किम् चन आममत् ॥ १ ॥

सा० भा० द्रापयति कुत्सितां गतिं प्रापयतीति द्रापिः । पापिनो नरकप्रदानेन क्लेशयतीत्यर्थः। अन्धोऽन्नं तस्य पतिः पालकः । भक्तानामन्नं पालयतीत्यर्थः । दरिद्रत् अकिञ्चनः । स्वयं विरक्तः । केवल इत्यर्थः । " एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन " इति श्रुतेः । कण्ठे नीलः अन्यत्र लोहित इति नीललोहितः । एतैः शब्दैः सम्बोध्यमान हे रुद्र । एषामस्मदीयानां पुरुषाणां पुत्रपौत्रादीनाम्। एषामस्मदीयानां पशूनां गोमहिष्यादीनां च समूहं मा भेः माभीषय । एषामुक्तानां सर्वेषां मध्ये किञ्चन एकमपि वस्तु माऽरः मा गच्छतु मा विनश्यत्वित्यर्थः । मो आममत् मैव रुग्णं भूत् ॥ १ ॥

म० भा० भा० द्रापे अन्धसस्पत इत्यस्य ऋषिः पुलहः । छन्द आस्तारपङ्क्तिः । 'परौ चेद्द्वादशाक्षरावास्तारपङ्क्तिः' । श्रीरुद्रो देवता । एवं विश्वरूपेण देवं स्तुत्वातः परमभयं याचते ॥

द्रापे इति । निकृष्टाया यातनानुभवात्मिकाया दारिद्र्यात्मिकाया वा गतेर्विकर्मणां गमयितः । यद्वा । सर्वस्य लोकस्योपसंहारलक्षणायाः शोच्याया गतेः कारयितः । द्रा कुत्सायां गतौ । ण्यन्तादच् इरिति इप्रत्ययः। अर्तिह्रीत्यादिना पुक् । यद्वा । आप्नोतेर्ण्यन्तादिप्रत्ययः । आपयिता आपिः द्राणं द्रा सैव कुत्सिता गतिः तस्या आपयिता द्रापिः । यद्वा । द्रापिरिति कवचनाम । उपचारेण तद्वति वर्त्तते । मत्वर्थीयो वा इकारः । द्रापिः सर्वत्र षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हे अन्धसस्पते । अन्धोऽन्नम् । अद्यत इत्यन्धः। अदेर्नुम् धश्चेत्यसुन्प्रत्ययः । तस्य पते स्वामिन् । षष्ठ्याः पतिपुत्रेति सत्वं सुबामन्त्रिते पराङ्गवत्स्वरे

इति षष्ठ्यन्तस्य पराङ्गवद्भावः । आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वस्यामन्त्रितस्याविद्यमानत्वात्ततः परस्य षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रितत्वादाद्युदात्तत्वम् । हे दरिद्रत् । निष्परिग्रह । अनादृतपरिग्रहेति यावत् । दरिद्रा दुर्गतो शतरि जक्षित्यादित्वेनाभ्यस्तत्वान्नाभ्यस्तादिति नुमभावः । स्वयमन्धसस्पतिरपि दुर्गतस्वभाव इति । पूर्वयोरामन्त्रितयोरविद्यमानत्वात्पादादित्वाच्च इदं न निहन्यते । षाष्ठिकमाद्युदात्तत्वमेव । हे नीललोहित । देवस्य हृदयादाविर्भूतो रुद्रो नीललोहितः यो हि भिक्षाटनादिकं चकार तस्यार्धं नीलमर्धं लोहितं नरनार्यात्मकत्वात् । नामरूपात्मकत्वाद्वा । अन्य आह । कण्ठे नीलमन्यत्र लोहितमिदं रूपमिति । यद्वा । निलीनं नितरां निरस्तं कालुष्यमस्येति नीललोहितः । पूर्ववन्निघातस्याभावे आद्युदात्तत्वम् । एवं भगवन्तं संबोध्याभयं याचते । एषां पुरुषाणामिति । एषामस्मदीयानां पुरुषाणां पुत्रादीनामेषां चास्मदीयानां पशूनां च गवादीनां मा भेः मा बिभीषथाः । क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वाच्चतुर्थ्यर्थे बहुलं छन्दसीति षष्ठी । यथा समुद्रस्य न पिबन्तीति भावे इत्यर्थः । अन्तर्भावितण्यर्थाद्बिभेतेर्लुङ् बहुलं छन्दसीतीडभावः । सिचि वृद्धिं बाधित्वा छान्दसत्वाद्व्यत्ययेन गुणः क्रियते । भिनत्तेर्लुङि दश्चेति दकारस्य रुत्वम् । पूर्ववदीडभावे पूर्ववद्गुणश्च । इमान्माभेर्मा हिंसीरित्यर्थः । पुरुषव्यत्ययो वा । मारः । ऋच्छतिरयमाङ्पूर्वो व्यसनकर्मा । यथा आर्त्तिमार्च्छेद्यजमान इति । अत्र आत्मना केवल एव तमर्थमाचष्टे । द्योतकाह्युपसर्गाः । अर्तेरन्तर्भावितण्यर्थाल्लुङि सर्त्तिशास्त्यर्त्तिभ्यश्चेत्यङ् । ऋदृशोऽङि गुण इति गुणः । इमान्मारः मा आर्तिमापः आर्त्तिर्मा जनीत्यर्थः । पूर्ववत्पुरुषव्यत्ययेन वा । एषां मध्ये कश्चिदपि मा अरत् । मा आर्त्तिमरत् । आर्तिं मा गमदित्यर्थः । अत्र च माभेः मा चार इति चार्थस्य गम्यमानत्वात् । चादिलोपे विभाषेति प्रथमा तिङ्विभक्तिर्न निहन्यते । द्वितीया तु निहन्यते । एव मा उमो उश्चार्थे मा चेत्यर्थः । किञ्चिदपि ज्वरादिकमेषां पश्वादीनामाममत् । इमान् पश्वादींस्त्वत्प्रसादेन मा हिंसीदित्यर्थः । रुजार्थानां भाववचनानामज्वरेति कर्मणि षष्ठी । अम रोगे ण्यन्ताल्लुङि च्लेश्चङादेशः । सन्वद्भावाभावश्छान्दसः । यद्वा । अत्स्मृदृत्वरप्रथम्रदेति विधीयमानमत्वं व्यत्ययेनास्यापि भवति । कश्चिदाह । आमो भङ्गः । आमं करोति आमयति । आमयतेर्लुङ् । किमपि ज्वरादिकमेषां पुरुषादीनामामत् आमं माकार्षीदिति । अग्लोपित्वादेव सन्वद्भावाभावः । पुरुषव्यत्ययो वा । एषां पश्वादीनां संबन्धि किञ्चिदप्यपत्यादिकं वस्तु त्वं मा हिंसीरिति । अभाववचनकर्मत्वाद्रुजार्थानामिति षष्ठ्यभावः । अत्रैषामिति त्रिरभिधीयते । एषु तृतीया इदमोऽन्वादेश इत्यशा-

देशः सर्वानुदात्तः इतरयोस्तूडिदमिति विभक्तेरुदात्तत्वम् । पश्नूनामित्यत्र नामन्यतरस्यामिति नाम उदात्तत्वम् ॥ १ ॥

अथास्य मन्त्रस्य पुरश्चरणम् । एकाहमुपवासं कृत्वायुतं जपेत् । कृतपुरश्चरणो भवति । कपिलाज्येनार्द्रायामयुतमाहुतीर्जुहुयात् । कृतधनो भवति । ज्वरे संनिपाते तस्य शिरस्तो दूर्वाग्राणां पञ्चसहस्रं जुहुयात् । तस्माज्ज्वरान्मुक्तो दीर्घायुर्भवति । अभिचारमोक्षकामो वैकङ्कतानामयुतं जुहुयात् । तस्याभिचारेभ्यो भयं न विद्यते । महाजनद्रोहे तिलमाज्यसिक्तमयुतं जुहुयात् । ततो भयं न विद्यते । उदुम्बरतिलानामयुतं जुहुयात्सर्वभूतेभ्यो भयं न विद्यते । ग्रामनगरमध्येऽग्निमुपसमाधाय तत्र घृताक्ततिलपिष्टानामयुतानि जुहुयात् । अश्वत्थदलेषु बलिमुपहरेत् । आदावप्यष्टसहस्रं जुहुयात् । तस्य रुद्रो भैरवरूपी भूतैः सह स्वयं दृश्यो भवति दृष्ट्वा यदि चलेदुन्मादी भवति । अचलस्य तस्य महासिद्धिर्भवति । आपदि तद्रूपं स्मरेदापद्भ्यश्च मुक्तिर्भवति । ततो ध्यानम् । आगुल्फासितकञ्चुको डमरुकाश्लिष्टो लसत्कुन्तली शूली कुण्डलितश्रवाः सतिलको मन्दं क्वणन्नूपुरः । श्रीमन्निर्मलदन्तपङ्क्तिकिरणः श्वेतायमानाननो देवो भैरववेषभूषितवपुर्ध्येयो मृडानीपतिः ॥ इति ॥

## ॥ अथ द्वितीयामृचमाह ॥

या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।
शिवा रुद्रस्य भेषजी तया नो मृड जीवसे इति ॥ २ ॥

या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजीति विश्वाहऽभेषजी । शिवा रुद्रस्य भेषजी तया नः मृड जीवसे ॥ २ ॥

सा० भा०-हे रुद्र ते त्वदीया शिवा शान्ता तनूर्या विद्यते तया तन्वा नोऽस्मान् जीवसे जीवयितुं मृडय सुखय । कथं तन्वाः शिवत्वं तदुच्यते । यस्मादेवं विश्वाहभेषजी सर्वेष्वहस्सु रोगदारिद्र्यादेरौषधवत् विनाशहेतुस्तस्माच्छिवा । किञ्च यस्माद्रुद्रस्य तादात्म्यप्राप्तये भेषजी औषधरूपा ज्ञानप्रदानेन जन्ममरणादिदुःखं निवारयति तस्मादप्येषा शिवा ॥ २ ॥

भ० भा० भा०-या ते रुद्र इत्यस्य मन्त्रस्य ऋषिः स्कन्दः । छन्दोऽनुष्टुप् । देवतापि स्कन्दरूपी रुद्रः । या ते रुद्र शिवा तनूरिति । हे रुद्र या ते तव शिवकरी सुखकरी तनूः तया नः मृडयेति वक्ष्यमाणेनान्वीयते । तयास्माकमपि शिवं

कुर्विति। तत्र द्विधा शिवत्वम्। देवस्य तन्वा सर्वदुःखनिवृत्तिभेषजत्वादात्यन्तिकदुःखनिवृत्तिभेषजत्वाच्च तत्र प्रथममात्रपरिग्रहे धनपुत्रस्वर्गादिसांसारिकसुखमात्रप्रदानेन देवो मृडयेत् । द्वितीयमात्रपरिग्रहे तु निःश्रेयसलक्षणमेव देवः शिवं कुर्यात् । तस्मादुभयविधसुखप्राप्तिमाशासान आह । शिवा विश्वाहभेषजीति । विश्वान्यहानि विश्वाहाः । राजाहः सखिभ्यष्टच् । तेषु भेषजी विश्वेष्वप्यहस्सु भेषजभावं न जहातीति भेषजान्तरम् । देशकालसकलशरीरावस्थादिभेदेनाह कदाचिदेव भेषजं स्यात् । केवलमामकेति ङीप् सप्तमीपूर्वपदप्रकृतिस्वरत्वम्। पूर्वपदे च परादिश्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । ईदृशी या शिवा ईदृशस्वभावा तया शिवव्यपदेशं भजत इत्यर्थः। किञ्च। शिवा रुद्रस्य भेषजीति । अयं रुद्रशब्दः क्रियानिमित्तकः । रुजं संसाराख्यं रोगं द्रावयतो विनाशयतः तव भेषजी तनूः । तया तन्वा संसाररोगात् भूतांस्त्वं भिषज्यसि । तादृशी च तया या शिवा तादृशस्वभावा तया च शिवव्यपदेशमितया शिवव्यपदेशं भजत इत्यर्थः तदुभयविधिशिवत्वस्वभावशालिन्या तन्वा नोऽस्मान्मृडय सुखय । छन्दस्युभयथेति सस्यार्धधातुकत्वाण्णिलोपः। जीवसे जीवितुम्। यथा वयं स्वस्था जीवेम तृप्तियोगेन जीवात्मलाभेन च । यद्वा । अस्मान् जीवयितुं त्वया हि सर्वे जीवयितव्याः । अभिमतप्रदानेन धारयितव्याः । तुमर्थे सेसे इत्यसेन्प्रत्ययः ॥ २ ॥

अथास्य मन्त्रस्य पुरश्चरणम् । अष्टशतप्राणायामान्कृत्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति । अनेन केवलं गर्भरक्षा विधातव्या । नान्यत् । व्यक्ते गर्भे तृतीये मासि रक्षां कुर्यात् । रुद्रमन्त्रसिद्धेन ब्राह्मणेन तदभिवृद्धौ स्वविभवानुगुणमलंकृत्य शम्भुमिव तं नमस्कुर्यात् । साधुगर्भे असाधवो न प्रेक्षितव्याः यदापि रुचिर्भवति तदैव कर्त्तव्यम्। राज्ञो गृहान्तराले विविक्ते अर्वाक् अर्वाग्गामि द्वयं स्वीकृत्य ध्वजाद्यलङ्कारैरलंकृत्य मन्त्रद्वयेन प्रस्थशुद्धतण्डुलैर्विकीर्य तस्मिन्नग्निकुण्डं वेदिकां च कृत्वा वेदिकायां साधारणघटस्योपरि महासेनमन्त्रेण स्वर्णपुष्पेण शम्भुमावाह्य तस्मिन्नर्वाग्गामिद्वयेन कलशान् बिन्दुयुतांस्तन्तुवेष्टितान् स्वर्णगर्भान् शरावपिहितान् समुद्रगामिनदीजलपूर्णान्नवपटच्छन्नान्निधाय तस्मिन्मध्ये जलपूर्णं घटमेकमार्द्रादिदिवसगणने सुवर्णेनान्यत्र नवरत्नपूर्णं कृत्वा त्रीणि नीरघटे प्रक्षिप्य महार्घ्यवसनैः प्रच्छाद्य सुस्थिरान्कृत्वा देवस्याराधनं गन्धलेपः । श्रीकण्ठं तामरसपुष्पं शीतारिधूपं दीपं यावदन्तं सर्पिषा सर्वत्र कर्पूरमिश्रमेवमाराध्य तत्र सन्निधावुपस्थानमन्त्रं जपित्वा ततः पटसंस्कारमन्त्रेण होमं कुर्यात् । होमद्रव्यं च तिलदूर्वाग्रलाजतुलस्युशीरदधिमध्वाज्यसंयुक्तं जुहुयात् । ततो हविः-

पूजा। अर्वाक् प्रस्थतण्डुलपक्कं हविः तेनाग्नौ होमं कुर्यात्। तेन मन्त्रेण होतव्यम् ततो गन्धवासं कर्पूरयुक्तं दद्यादुद्देशितो वान्यो भुक्त्क्त तदेव गुर्वोः संभवन्। एवं सायं तद्युगं च स्पृष्ट्वा जपेदाचार्यः। तत्र नित्यवद्वस्त्रपरिवृत्तिः वसनोत्तरीये च भवतः। एवमर्वाग्द्वयं पूजा। ब्राह्मणानपि तावन्तो भोजयेन्नित्यम्। एवं विधानस्य राज्ञ एव शक्तिः। एवं कृते सदपत्यमायुष्मद्भवेत्। गर्भपातो न विद्यते। सर्वं गन्धादन्यदुपदेशतः प्रधानम्। होमदेशं स्त्रीशूद्रा न प्रविशेयुः न पाखण्डादयो वैदिकत्वान्मन्त्रस्य। अन्त्यदिने स्नानम्। तद्दण्डदानरूपेण दद्याद्गुरवे। ततः कुमारग्रहार्थं गणपूजां कुर्यात्। तदपत्यमायुष्मद्भवति। यथेदं प्रसङ्गादन्यदुच्यते। कन्यार्थी लभते कन्यां हुत्वा लाजान् घृतप्लुतान्। अपामार्गसमिद्धोमैरलक्ष्मीं नाशयेद्बुधः। सर्वकल्मषनाशाय जुहुयाच्च तिलाहुतीः। ब्राह्मणादीन्वशे कुर्यात् हुत्वा खदिरसंभवान्। सितरक्तैर्नीलपीतैः सूत्रैः संवेष्टितान् क्रमात्। लक्षं हुत्वा घृतं सर्वान्कामानाप्नोति साधकः। जुहुयाद्वस्त्रकामस्तु कुसुमैः कुमुदादिभिः। यद्वर्णं जुहुयात्पुष्पं तद्वर्णं वस्त्रमाप्नुयात्। वृष्टिकामः शुचौ देशे गोमयेनोपलेपिते। रक्तद्रव्येण तत्रैव मण्डलं परिलेखयेत्। मण्डलस्य पुरस्तात्तु नवं कुम्भं निधापयेत्। सूत्रेण वेष्टितं सम्यक् पूरितं गन्धवारिणा। आवाहयेत्ततः कुम्भे सूर्यमेकाग्रमानसः। तत्रस्थमर्चयेद्देवं पूर्ववत्साधकोत्तमः। पयसा जुहुयात्तत्र शतमष्टोत्तरं बुधः। ध्यायन्नेकाग्रधीः सूर्यं जपेन्मन्त्रसहस्रकम्। एवं कुर्वीत सप्ताहं द्वादशाहमथापि वा। ततः प्रसन्नो भगवान्महावर्षं प्रमुञ्चति। अहोरात्रमुपोष्यैव पुत्रकामः शुचिव्रतः। पायसं जुहुयादग्नावष्टोत्तरशताहुतीः। ऋतुस्नातां ततो भार्यां शुचिवस्त्रामलङ्कृताम्। भोजयेद्धुतशेषं तु जपन्नष्टशतं बुधः। ब्राह्मणान्भोजयेच्चैव कारयेत्स्वस्तिवाचनम्। ततः पुत्रमवाप्नोति तेजस्विनमनामयम्। अनिष्टदर्शने चैव तथा दुःस्वप्नदर्शने। अभिचारकृतैर्दोषैरलक्ष्म्या च समावृते। विग्रहाद्युपसर्गे च भये च समुपस्थिते। तथा च ग्रहपीडायां भूतावेशकृतेषु च। एवमादिषु चान्येषु दोषेषूपहितेषु च। पूर्वोक्तं मण्डलं कृत्वा नवं कुम्भं तथैव च। गन्धोदकेन सम्पूर्णं सर्वमङ्गलसंयुतम्। एलालवङ्गकर्पूरनिम्बजातिफलैर्युतम्। देवमावाह्य कलशे त्वर्चयेत्तत्र होमयेत्। मन्त्रेणानेन तद्देवमष्टोत्तरसहस्रकम्। अभिमन्त्र्य ततस्तेन ह्यात्मनो वा परस्य वा। अभिषेकं प्रकुर्वीत सर्वदोषैर्विमुच्यते। यस्तु मन्त्रं जपेन्नित्यं प्रातः स्नात्वा सहस्रकम्। श्रीरारोग्यं च तेजश्च वर्धते तस्य सर्वदा। संवत्सरं जपेद्यस्तु क्षीराहारो जितेन्द्रियः। अर्चनं च यथाशक्ति कुर्वन्नयुतमन्वहम्। संसिद्धिमतुलां गच्छेदणिमादिगुणैर्युताम्। किं तस्य मानुषैर्भोगैः प्रसन्ने वै जगत्पतौ। बहुना किमिहोक्तेन तच्चित्तस्तत्परायणः

तद्भावभावितो मन्त्रं जपेन्मुक्तो भवेन्मुनिरिरिति । ध्यानम् । द्रुतचामीकरप्रख्यं शक्तिपाणिं षडाननम् । मयूरवाहनारूढं स्कन्दरूपं शिवं स्मरेत् ॥

॥ तृतीयामृचमाह ॥

इमा॒ꣳरुद्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्रभ॑रामहे म॒तिम् । यथा॑ न॒ः शमस॑द्द्विप॒दे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ अ॒स्मिन्ननां॑तुरम् इति ॥ ३ ॥

इमाम् रु॒द्राय॑ त॒वसे॑ क॒प॒र्दिने॑ क्ष॒यद्वी॑रा॒येति॑ क्ष॒यत्ऽवी॑राय प्रेति॑ भ॒रा॒म॒हे॒ म॒तिम् । यथा॑ न॒ः शम् अस॑त् द्वि॒पद॒ इति॑ द्वि॒ऽपदे॑ चतु॑ष्पद॒ इति॒ चतु॑ःऽप॒दे॒ विश्व॑म् पु॒ष्टम् ग्रामे॑ अ॒स्मिन् अनां॑तुर॒मित्यना॑ऽतु॒र॒म् ॥ ३ ॥

सा० भा० यथा येन प्रकारेण नोऽस्मदीयाय द्विपदे पुत्रपौत्रादिरूपाय मनुष्याय । चतुष्पदे गोमहिष्यादिरूपाय पशवे च शम् असत् सुखं स्यात् । किंचास्मिन् ग्रामे विश्वं सर्वं प्राणिजातं पुष्टं सुखपूर्णम् अनातुरम् उपद्रवरहितं च यथा भवति तथा वयं रुद्राय रुद्रार्थे इमां मतिं पूजाध्यानादिविषयां बुद्धिं प्रभरामहे प्रकर्षेण पोषयामः । कीदृशाय रुद्राय । तवसे बलयुक्ताय । अस्मदपेक्षितं कर्तुं समर्थायेत्यर्थः । कपर्दिने जटाबन्धयुक्ताय तापसवेषायेत्यर्थः । क्षयद्वीराय क्षीयमाणप्रतिपक्षपुरुषाय[1] । अन्यथाभानरूपपापविनाशहेतव[2] इत्यर्थः ॥ ३ ॥

भ० भा० भा० इमा ꣳरुद्राय तवसे कपर्दिन इति द्वयोर्माण्डव्य ऋषिः । द्वे अपि जगत्यौ । रुद्रो देवता । केचिदाहुः । ऋग्द्वयसमुदायात्मक एको मन्त्रः । अनुष्टुप् छन्द इति ॥

इमा ꣳरुद्रायेति । इमां मतिमीदृशीं बुद्धिं मानसपूजाख्यां रुद्राय प्रभरामहे । प्रकर्षेण धारयामः । रुद्रं सर्वदा मनसा पूजयाम इति यावत् । मन्यतेरिच्छाकर्मणः क्तिनि रूपम् । मतिरिरिति स्तुतिनाम । इमां मम मतिं स्तुत्यात्मिकां पूजां रुद्राय प्रभरामहे । सर्वदा रुद्रं स्तुत्या आराधयाम इत्यर्थः । मन्त्रे वृषेत्यादिना उदात्तः क्तिन् । भृञ् भरणे भौवादिकः । स्तुतिभिर्हविषां प्रदानैश्च तद्विषयां मतिमविच्छिन्नां कुर्म इत्यभिप्रायः । यद्वा रुद्र एव स्तोतव्य उपासितव्यः प्रश्रयितव्यो द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । तद्वि-

१ ग० ङ०प्रतिपक्षिपुरुषाय । २ ख० ग० पुरुषरूपाय पापविनाश० ।

षयामेव मतिं सर्वदा बिभ्रम इति। कीदृशाय। तवसे वर्द्धयित्रे। तु इति सौत्रो धातुर्वृद्ध्यर्थः। ततो ण्यन्तादसुनि उदात्तनिवृत्तिस्वरेणासुन एवोदात्तत्वम्। यद्वा। तवो बलं तद्वते तवसे। मत्वर्थीयो लुप्यते। ततश्च तद्वति वृत्तेरतद्विषयत्वादाद्युदात्तत्वाभावः। कपर्दिने। गतम्। क्षयद्वीराय। क्षयन्ति निवसन्ति वीरा विक्रान्ता यस्मिन् यमाश्रित्य स क्षयद्वीरः। क्षि निवासगत्योः तौदादिकः। छन्दस्युभयथेति शस्यार्धधातुकत्वात् ङित्वाभावः। यद्वा। क्षि क्षये। भौवादिकः। क्षयन्ति विनश्यन्ति वीरा यं प्राप्य स क्षयद्वीरः। पूर्ववच्छतुरार्धधातुकत्वाल्लसार्वधातुकानुदात्तत्वाभावात्तत एकादेशस्योदात्तत्वम्। यद्वा। विकरणव्यत्ययेन शः। अथ प्रभरणं विशेष्यते। यथा। यादृग्विधे प्रभरणे सति नः अस्माकं स्वभूताय द्विपदे पुत्रादये चतुष्पदे पश्वादये च शं सुखं असत् स्यात्। पञ्चमो लकारः। लेटोडाटावित्यडागमः। संख्या सुपूर्वस्येति पादस्य लोपे पादः पदिति पद्भावः। क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वाच्चतुर्थी। तत्र प्रथमे द्वित्रिभ्यां पाद्दन्नित्युत्तरपदान्तोदात्तत्वम्। द्वितीये तु बहुव्रीहिलक्षणं पूर्वपदप्रकृतिस्वरत्वम्। पुनश्च विशेष्यते। यथा च प्रभरप्रमाणेष्वस्मासु विश्वमपि प्राणिजातं यदस्मदीयं न भवति तदपि पुष्टमनातुरं च स्यात्। क्व अस्मिन् ग्रामे कस्मिन् वयं वसामः। कीदृशा ईदृशीं मतिं प्रभराम इति। आहुश्च पौराणिकाः। "रुद्राध्यायी वसेद्यत्र ग्रामे वा नगरेऽपि वा। न तत्र क्षुत्पिपासाद्या दुर्भिक्षव्याधयोऽपि च" इति। अथवा यथा नोऽस्माकं ग्रामेऽस्मिन्द्विपदे चतुष्पदे च शं स्यात्। विश्वमपि वस्तु धनधान्यादिकं समृद्धमनामयं च स्यादिति। अस्मिन्नित्यत्र ऊडिदमिति विभक्तेरुदात्तत्वम्॥ ३॥

॥ चतुर्थीमृचमाह ॥

मृडा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ इति॥ ४॥

मृड नः रुद्र उत नः मयः कृधि क्षयद्वीरायेति क्षयत्ऽवीराय नमसा विधेम ते। यत् शम् च योः च मनुः आयजइत्याऽयजे पिता तत् अश्याम तव रुद्र प्रणीताविति प्रऽनीतौ॥ ४॥

सा०भा०हे रुद्र नोऽस्मान् मृडय इहलोके सुखय । उत अपिच नोऽस्माकं परलोकेऽपि मयः सुखं कृधि कुरु । क्षयद्वीराय क्षपितास्मदीयपापाय ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम । पिता पालको मनुः प्रजापतिः शं च सुखं च योश्च दुःखपृथग्भावं च यदायजे यत्किंचित्सम्पादितवान् । तत्सर्वं वयं हे रुद्र तव प्रणीतौ प्रणये स्नेहाऽतिशये सति अश्याम प्राप्नुयाम ॥ ४ ॥

भ०भा०भा० अथ द्वितीया । मृडानो रुद्रेति । हे रुद्र नोऽस्मान्मृडय । पुत्रधनादिसमृध्या सुखितान् कुरु । पूर्ववण्णिलोपः । द्व्यचोऽतस्तिङ इति दीर्घत्वम् । उत अपिच नोऽस्माकं मयः सुखं निरतिशयानन्दात्मकं कृधि कुरु । बहुलंछन्दसीति शपो लुक् धिभावश्च । कः करत्करतीत्यादिना सत्वम् । क्षयद्वीराय । व्याख्यातम् । पूर्ववत्कर्मणः संप्रदानत्वाच्चतुर्थी । क्षयद्वीरं त्वां नमसा नमस्कारेणान्नेन वा चरुपुरोडाशादिलक्षणेन विधेम परिचरेम । विधतिः परिचरणकर्मा । यथा त्वामेव सर्वदा परिचरेम । तथास्मान्मृडय मयश्च कुरु । यद्वा हे रुद्र अस्मान्मृडय मयश्च कुरु । तदर्थं त्वां क्षयद्वीरं परिचरेमेति विभक्तिव्यत्ययः । इत्थं सुखप्राप्तिः प्रार्थिता । अधुना दुःखनिवृत्तिमाशास्ते । शं शमनम् । आगतानां दुःखहेतूनां योऽपृथग्भावः । अनागतानां दुःखहेतूनामनुन्मेषः पृथग्भावः । पृथग्भावकर्मणो यौतेः अन्येभ्योऽपि दृश्यन्त इति विच्प्रत्ययेन प्रथमा णिद्वद्भावाभावश्च । यद्वा । असुन् अवादेशाभावः । यत् यादृशं शं च योश्च मनुः मन्वानः सर्वज्ञः पिता प्रजानां पिता प्रजापतिः त्वया स्रष्टृत्वे सुनियुक्तः । आयजे । आङ् मर्यादायाम् । मर्यादया दत्तवान् । वर्णाश्रमादिभेदेन व्यवस्थितं कृतवान् । इत्थमसौ दुःखप्रहाणं कुर्यात् । अत्र एत्वाभ्यासलोपयोः कृतयोर्वर्णव्यत्ययेन एकारस्याकारः । बह्वृचास्तु " आयेजे " इत्येवाधीयते । केचिदाहुः ' आयजे ' आत्तवान् पक्षत्वेन स्वीकृतवानिति । तत्तथैव अश्याम अश्नुवीमहि त्वत्प्रसादेन प्रमत्ता मा भूम । सत्यपि प्रमादे त्वत्प्रसादेनातिक्रमदोषभाजो मा भूमेति । अश्नोतेर्लिङ् । व्यत्ययेन परस्मैपदम् । बहुलं च्छन्दसीति विकरणस्य लुक् । यद्वा । आशिषि लिङ् छन्दस्युभयथेति सार्वधातुकत्वात्सलोपः । हेतुमाह । तव रुद्र प्रणीतौ । रुद्रेति पुनर्वचनमाभिमुख्यातिशयप्रतिपत्त्यर्थम् । हे रुद्र प्रणीतौ शासने यस्माद्वर्तामहे । यद्वा । तवास्मासु प्रणीतौ प्रणये भृत्यस्वाभिभावनिमित्तेऽनुग्रहे सति तदश्यामेति । तादौ च नितीति गतेः प्रकृतिस्वरत्वं केचिदाहुः । प्रसिद्ध एव मनुः स्मर्तृत्वे त्वया नियुक्तः प्रजानां पिता हितकारित्वेन पितृस्थानीयः शं दुःखप्रहापणप्रकारं यादृशं व्यवस्थितवांस्तत्तथैवाश्नुवीमहि । यस्मात्त्वां परिचराम इति । अपरे तु ब्रुवते । "यत् त्वदीयं

शं योश्च उभयविधदुःखमहापणप्रकारं मनुः सर्वज्ञोऽपि जगतां पिता प्रजापति-रायजे आभिमुख्येनायजति प्रशंसति स्वयमप्यादत्ते वा तद्वयमश्याम तादृशरक्षा-भाजनं भूयास्म'' इति।यजेरात्मने पदं प्रथमपुरुषैकवचने लोपस्त आत्मने पदेष्विति तकारलोपे अतोगुणे इति पररूपत्वं विकरणव्यत्ययेन शः। तेन सत्यपि लसार्व-धातुकानुदात्तत्वे एकादेशस्वरेणान्तोदात्तत्वम् ॥ ४ ॥

अथानयोः पुरश्चरणम् । कृच्छ्रं चरित्वा नवसहस्रं जपेत् । कृतपुरश्चर-णो भवति । अमावास्यायां चतुष्पथेऽग्निमुपसमाधाय दधिसारमयुताहुतिमात्रं जुहुयात् । गवादीनां शान्तिर्भवति । एताभ्यामेव राजवाहनानां शान्तये जलं स्पृष्ट्वा प्रत्यार्द्रमयुतं जपं कृत्वा जपजलेन वाहनशालां प्रोक्षयेत् । वाहनानां शान्तिर्भवति । वाहनानां किञ्चिदुपयोज्यं तेन जलेन मिश्रितं कृत्वा उपयो-जयेत्। तिरश्चां शान्तये तिलमाज्यमिश्रं जुहुयादयुतम्। अन्येषां शान्तये दूर्वा-णामयुतं जुहुयात् । तेषां शान्तिर्भवति । ध्यानम् । दिव्यसिंहासनासीनं स्तू-यमानं महर्षिभिः । प्रसन्नवदनं ध्यायेत्सोमं सोमार्धधारिणम् ॥

॥ पञ्चमीमृचमाह ॥

मा नो॑ म॒हान्तं॑ मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्षन्त॑मु॒त मा न॑ उक्षि॒तम्। मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॑ प्रि॒या मा न॑स्त॒नुवो॑ रुद्र रीरिषः इति ॥ ५ ॥

मा न॒ः म॒हान्त॑म् उ॒त मा न॒ः अ॒र्भ॒कम् मा नः॒ उक्षन्तम् उ॒त मा न॒ः उ॒क्षि॒तम्। मा न॒ः व॒धीः पि॒तर॑म् मा उ॒त मा॒तर॑म् प्रि॒याः मा न॒ः त॒नुवः॑ रु॒द्र री॒रि॒षः॒ ॥ ५ ॥

सा०भा० हे रुद्र नोऽस्मदीयं महान्तं पुरुषं स्थविरं मा रीरिषः मा हिंसीः । उत अपिच नोऽस्मदीयमर्भकं बालं मा रीरिषः । किंच नोऽस्मदीयं उक्षन्तं सेचनसमर्थं पुरुषं मा रीरिषः । उत अपिच नोऽस्मदीयमुक्षितं गर्भस्थं पुरु-षं मा रीरिषः । नोऽस्मदीयं पितरं मा वधीः । उत अपिच मातरं मा वधीः । नोऽस्मदीयाः प्रियाश्च तनुवः शरीराणि मा रीरिषः ॥ ५ ॥

म० भा० भा० मा नो महान्तमित्यस्य ऋषिर्देवरातः। छन्दो जगती। नन्दीश्व-रूपो रुद्रो देवता ॥

मा नो महान्तमिति । हे रुद्र नोऽस्माकं संबन्धिनं महान्तं पितामहादिकं अनुग्राह्यं विद्यावयोभिर्ज्येष्ठं पुत्रं वा श्रद्धेयगुणकं मा वधीः रोगादिभिर्मा हिंसीः। उतापिचास्माकमर्भकं अत्यन्तशिशुं पुत्रमनुग्राह्यं मा वधीः। मा न उक्षन्तम् सेचनसमर्थं तरुणं संतानकरं मा वधीः। उतापिच । मा न उक्षितम्। सिक्तं गर्भस्थं अनुकम्प्यतरं मा वधीः। पितरम्। स्पष्टम्। उतापिच। मातरमपि मा वधीः । श्रद्धेयतरावेतौ । तथा नोऽस्माकं प्रियास्तनुवः शरीराणि प्रियत्वादेव मा रीरिषः मा हिंसीः। रोगादिभिः पीडिता मा कृथाः। भार्यापुत्राद्यपेक्षं च बहुवचनम् । अस्माकमस्मदीयानां च प्रियास्तनूः मा रीरिष इति ॥५॥

अथास्य मन्त्रस्य पुरश्चरणम् । उपवासत्रयं कृत्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति। अनेन स्वजनरक्षा कर्त्तव्या। यवतिलानामाज्याक्तानामयुतं जुहुयात् । अश्वत्थसमिधामयुतं जुहुयात् । आज्येनायुतं जुहुयात् । प्रतिसंवत्सरमार्द्रायामयुतं जुहुयात् । एवं कृते आत्मीयस्त्रीबालवृद्धजनस्य शान्तिर्भवति। अन्यस्मिन्नपि शान्तिकरणे जपमयुतं कुर्यात् । विशेषेण राजा प्रतिमासं मन्त्रेणानेन कान्त्यर्थमार्द्रायां होमं कारयेत् । तेन राज्ञोऽन्तःपुरादयोऽपि वर्द्धन्ते। ध्यानम् । बालेन्दुमुकुटं देवं तरुणादित्यविग्रहम् । ध्यायेन्नन्दीश्वराकारं गणेश्वरसमावृत्तम् ॥

॥ षष्ठीमृचमाह ॥

मा नस्तोके तनये मा न आयुषि मानो गोषु मा नो अश्वेषु रीरिषः। वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते इति ॥ ६ ॥

मा नः तोके तनये मा नः आयुषि मा नः गोषु मा नः अश्वेषु रीरिषः। वीरान् मा नः रुद्र भामितः वधीः हविष्मन्तः नमसा विधेम ते ॥ ६ ॥

सा० भा० हे रुद्र नोऽस्मदीये तोके अपत्यमात्रे तनये विशेषतः पुत्रे मा रीरिषः हिंसां मा कुरु। नोऽस्मदीये आयुषि मा रीरिषः । नोऽस्मदीयेषु गोषु मा रीरिषः । नोऽस्मदीयेष्वश्वेषु मा रीरिषः। भामितः क्रुद्धः सन् नोऽस्मदीयान् वीरान् भृत्यान् मा वधीः । वयं हविष्मन्तः हविर्युक्तास्ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम ॥ ६ ॥

म० भा० भा० मा नस्तोक इत्यस्य मन्त्रस्य ऋषिर्भगवान्। छन्दो जगती। देवोऽपि भगवानेव॥

मा नस्तोक इति। हे रुद्र नोऽस्माकं तोके पुत्रे तनये तत्पुत्रे च मा रीरिषः मा हिंसां कृथाः। तद्विषये रोगादिभिर्हिंसको मा भूः। द्वितीयार्थे वा व्यत्ययेन सप्तमी। तोकं तनयं च मा हिंसीरिति। "आयुः षोडशवर्षशतं महषोडशं वर्षशतमजीवत्। महषोडशं वर्षशतं जीवति" इति। छान्दोग्ये श्रवणात्। "विंशतिवर्षशतं" इति सांवत्सरिकाः। "सप्तविंशत्यधिकानि शतं वर्षाणि"। इत्येके। "शतमेव" इत्यन्ये। तस्मिन्नायुषि मा रीरिषः। मा नो गोषु। गोमहिष्यादिषु मा रीरिषः। तथाश्वेषु अश्वगजादिषु मा रीरिषः। वीरांश्चास्मदीयान्मा वधीः। भामितः। अपचारेण क्रोधितोऽपि सन्। वेतेः प्रजननकर्मणः। वीराः प्रजाः तस्य पुनर्ग्रहणं सत्पुत्रपरिग्रहणार्थम्। विक्रान्ता वा वीराः। भामक्रोधे ण्यन्तान्निष्ठा। यद्वा संजातक्रोधो भामितः कृतापचारेष्वप्यस्मासु भामितो भूत्वा मा वधीः। तदर्थं वयमपि हविष्मन्तश्चरुपुरोडाशादिलक्षणेन हविषा तद्वन्तः नमसा नमस्कारेण ते तव विधेम परिचरेम। पूर्ववत्षष्ठी द्वितीयार्थे वा। त्वां परिचरेमेत्यर्थः॥ ६॥

अथास्य मन्त्रस्य पुरश्चरणम्। कृच्छ्रं चरित्वा उदुम्बरपात्रेण कापिलं सर्पिः सहस्राभिमन्त्रितं कृत्वा तेन स्वाग्नौ मथिते वाष्टसहस्रं हुत्वा महाव्याहृतिभिर्हुत्वा शतं शेषमशित्वा त्रिरात्रमुपवसेत् ततश्चरुभोजी पञ्चाशत्सहस्रं जपेत्। गुरवे पञ्चनिष्कं दद्यात्। ततः कृतपुरश्चरणो भवति। अनेन राज्ञामायुष्कामानामुच्यते। नित्यवद्राजा स्वाग्नौ मथितेऽपि वा केवलमाज्यसिक्तैस्तिलैरयुतं जुहुयात्। अष्टभिर्ब्राह्मणैरष्टासु दिक्षु राजानमभितो भस्माष्टशताभिमन्त्रितमादाय राजरक्षां कुर्यात्। एतदपि नित्यवत् कार्यम्। अनेनैवापरमुच्यते। श्वेतकमलैर्दधिमधुघृताक्तैरयुतं जुहुयात्। एकादशरुद्ररूपैर्ब्राह्मणैर्मन्त्रसिद्धैः सद्यःसिद्धैर्वा कार्यः। अथ सद्यःसिद्धिरुच्यते। आचार्यान्मन्त्रं लब्ध्वा त्रिरात्रमुपोष्य त्रिरात्रं निरन्तरं जपेत् सद्यः सिद्धो भवति। तत्तत्कर्मयोग्यतैतावता। एवं कृते राज्ञां श्रीर्वर्धते। अनेन दूर्वाणां घृताक्तानामयुतं नित्यवदेव जुहुयात्। राजा चिरजीवी भवति। अनेन कलशानष्टसहस्रमष्टशतं वा जलपूर्णान् स्वर्णरजतताम्रमयान्वाभिमन्त्र्य गन्धादिभिराराध्य नववस्त्रवेष्टितान्कृत्वान्यान्यपि मङ्गलानि कृत्वा आचार्यो राजजन्मदिने राजानं स्नापयेत् यावन्तो हि कलशाः स्युः। एवं कृते राजा दोषैः कायिकैः पातकादिभिरप्यलिप्तो भवति। राज्ञो वा वृद्ध्यर्थमनेन नित्यवदेकेन ब्राह्मणेनाष्टसहस्रं जपं कारयेत्। वाहनायुधशालासु

रत्नाकरादिषु च मासिमासि सौम्ये नक्षत्रे शान्तिं कुर्यात्। अश्वत्थापामार्गसमिधां दधिमधुघृताक्तानामयुतं जुहुयात्। गतायुषोऽप्यायुर्वर्धते। द्यूते व्यवहारे च मन्त्रमेतं जपेत् न पराजितो भवति। त्रिरात्रमुपोष्य निरन्तरं जपेत्। ततश्चरुभोजी बिल्वफलानांमध्वाक्तानामयुतं जुहुयात्। स्वर्णसहस्रं लभते। कुमुदानां दधिमधुघृताक्तानामयुतं जुहुयात्। कन्यां लभते। अनेनैव संवत्सरं चरुभोजी कपिलाघृतेन स्वाग्नौ नित्यवदष्टसहस्रमष्टशतं वाहुतीर्जुहुयात्। सर्वस्मान्महापातकान्मुच्यते। अनेन मलयजक्षोदमभिमन्त्र्य ललाटे धारयेत्सर्वे वश्याः स्युः। अपामार्गसमिद्भिरष्टसहस्रं प्रतिजन्मदिने जुहुयादपमृत्युं जयति। वृष्टिकामः सूर्यं जपापुष्पैरयुतैराराधयेत् रक्तोष्णीषवसनानुलेपनो भूत्वा आदित्यवारे। भगवानादित्यो महावृष्टिं मुञ्चति। दूरमार्गगामी दश शर्करा गृहीत्वाष्टसहस्राभिमन्त्रिताः दिक्षु दशसु प्रक्षिप्य गच्छेत्। स तु यावद्गमनं क्षेमी भवति। कर्मणामविघ्नकामो मन्त्रमयुतं जपित्वा कर्मारभेत। अनायासेन कर्मणामन्तं गच्छेत्। पुत्रकामोऽनेन लक्षमाज्येन जुहुयाद्वंशकरं पुत्रं लभते। यं यं जेतु मिच्छेत्तं तं सिकताकारं विधाय तस्य शिरसि स्थित्वायुतं जपेत् सर्वत्र विजयी जायते। अन्यदपि सर्वमनेन संभवति। मन्त्रप्रभावाद्देवस्य साक्षात्सिद्धानामेव फलति अन्येषांवृथा प्रयास इति मन्तव्यम्। ध्यानम्। दधानमेकादशधा विभक्तदेहं विशुद्धस्फटिकप्रकाशम्। तेजोनिधिं शूलिनमिन्दुमौलिं विचिन्तयेत्तत्र सदैव रुद्रम्॥

॥ सप्तमीमृचमाह ॥

आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षां च नो अधिं च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः इति॥ ७॥

आरात् ते गोघ्न इति गोऽघ्ने उत पूरुषघ्न इति पूरुषऽघ्ने क्षयद्वीरायेति क्षयत्ऽवीराय सुम्नम् अस्मे इति ते अस्तु। रक्षं च नः अधीति च देव ब्रूहि अध च नःशर्म यच्छ द्विबर्हा इति द्विऽबर्हाः॥ ७॥

सा०भा० गोघ्ने गोघ्नस्य पुरुषघ्ने पुत्रपौत्रादिपुरुषघ्नस्य क्षयद्वीराय क्षपितभृत्यस्य ते तव उग्रं रूपं आरात् अस्तु दूरे तिष्ठतु। यत्तु सुम्नं त्वदीयं सुखकरं

रूपं तदस्मे अस्मास्वस्तु । "घोरान्या शिवान्या" इति । यच्छरीरद्वयमुक्तं तयोर्द्व-योर्मध्ये यद्घोरं शरीरं तद्दूरे गच्छतु शिवं शरीरमत्रागच्छत्वित्यर्थः । किञ्च नोऽस्मान् रक्ष सर्वतः पालय । किञ्च हे देव अधिब्रूहि अस्मानितरेभ्यो यजमानेभ्योऽधिकान् देवेषु ब्रूहि । अधा च अपिच । द्विबर्हाः द्वयोर्लोकयोर्वर्धयिता त्वं शर्म यच्छ सुखं देहि ॥ ७ ॥

म० भा० भा०आरात्त इति मन्त्रस्य ऋषिरत्रिः । त्रिष्टुप् छन्दः । शम्भुर्देवता ।

आरात्त इति षष्ठ्यर्थे चतुर्थी वक्तव्येति सर्वाश्चतुर्थ्यः । उताप्यर्थे । गाः पुरुषांश्च घ्नतः हिंसतस्तव यत्सुम्नं सुखं गवां पुरुषाणां च हिंसया या तव तृप्तिः सा आरात् दूरे अस्तु । अस्मत्तोऽन्यत्र तथा कुर्वन् क्रीडतु देव इत्यर्थः । हन्तेर्बहुलं छन्दसीति क्विपि उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । क्षयद्वीरस्य तव यत् सुम्नं तदस्मे अस्मास्वस्त्वित्यर्थः । यत्सुम्नं सुखं तदस्मास्वस्त्विति अहिंसामात्रेणैव । एतेन कृतीति देवो न मन्तुमर्हतीत्याह । रक्षा च नः अस्मान् । द्व्यचोऽतस्तिङ इति दीर्घत्वम् । इदं चाप्यस्त्वित्याह । यद्वा । रूपमित्यध्याह्रियते । गवादीनां हन्तुस्तव यद्रूपं क्रूरं तदारादस्तु । सुपां सुलुगिति शे आदेशः । क्षयन्ति निवसन्ति वीराः प्रजा अस्मिन्निति क्षयद्वीरो व्याख्यातः । अभिगम्यः अनुग्राहकस्वभावः सर्वेषामिति यावत् । तादृशस्य तव यत्सुम्नं अनुग्राह्यरक्षणप्रभवा तृप्तिः सा अस्मास्वस्त्वित्यर्थः । अधि च देव ब्रूहि । अधिवचनं व्याख्यातम् । किमस्मत्प्रार्थनया देव एव "मा भैष्ट रक्षिष्यामि च"इत्यस्मानाधिपत्येनासकृद्वदत्वित्यर्थः । यद्वा । पक्षपातेनास्मभ्यं हि । न सर्वलोकसाधारणमिति । अधा च अपि च । निपातस्य चेति दीर्घत्वम् ।नोऽस्मभ्यं शर्म सुखं यच्छ देहि । द्विबर्हाः लोकद्वयप्रथितमैहिकामुष्मिकं चेत्यर्थः । बृह बृहि वृद्धौ । द्वयोर्लोकयोरपि बृह्यते इति द्विबर्हाः । गतिकारकयोरिति पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् । परादिश्छन्दसि बहुलमिति उत्तरपदाद्युदात्तत्वं च बहुव्रीहिर्वा नपुंसकैकवचने छान्दसं दीर्घत्वम् । यद्वा । देवस्येदं विशेषणम् । इह चामुत्र च सुखस्य बर्हयिता त्वमिति ।"द्वयोरेव लोकयोर्बर्हयिता"इत्यन्ये । यद्वा बर्ह इति पक्षनाम । द्विबर्हाः पक्षद्वयावलम्बी । ऐहिकमामुष्मिकं च शर्म यच्छेति ॥ ७ ॥

अथास्य पुरश्चरणम् । त्रिरात्रमुपोष्य त्रिरात्रं निरन्तरं जपेत् । कृतपुरश्चरणो भवति । अनेनायुष्कामानामेव नान्येषामित्याहुः । "शतायुः पुरुष उच्यते" इति श्रुतौ । एवं सति इह जन्मनि जन्मान्तरे वा आयुषः क्षयकारणैः कर्मभिर्बालादयो म्रियन्ते तेषामायुर्वर्धनाय मन्त्रेणानेन प्रयोग उच्यते । नित्यवदनेन स्वाग्नौ सर्पिषाष्टसहस्रमष्टशतं वा आहुतीर्जुहुयात् । दूर्वाणामष्टसहस्रं दधिमधुघृताक्तानां

जुहुयात्। स्वजन्मनक्षत्रे नित्यमेवाष्टसहस्रं जपेत्। आर्द्रायां विशेषेण। प्रत्यार्द्रं दूर्वापामार्गशमीतिलानां दधिमधुघृताक्तानां प्रत्येकमयुतमाहुतीर्जुहुयात्। रात्रौ यावत्पञ्चसहस्रं जपेत् तावत्प्रदक्षिणाः कुर्यात्। राजा जन्मदिने दूर्वापामार्गादि प्रत्येकमयुतं जुहुयात् राजा दीर्घायुर्भवति। अशक्तानां स्रोतसि होमः। ततोऽत्यन्ताशक्तानां जप एव। शुद्धतण्डुलैर्मध्वाज्याक्तैरयुतं जुहुयात्तस्यायुर्वर्धते मन्त्रेणानेन देवस्योपरि अर्कसुमनोभिरयुतमाराधयेत् तस्य श्रीर्वर्धते। •पश्चिमद्वारालये वा चरुभोजी अधःशायी ब्रह्मचर्यवानक्षारालवणाशी देवमभितः सहस्रं जपेदेवं कृते शतायुः सप्तजन्मसु भवति। अशक्तस्य भिक्षाहारः प्रशस्त इति। अथ ध्यानम्। कुर्वाणं सन्निधौ देव्या देवमानन्दताण्डवम्। हुताशनधरं ध्यायेत्तप्तकाञ्चनसन्निभम्॥

॥ अष्टमीमृचमाह ॥

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्।
मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः
इति ॥ ८ ॥

स्तुहि श्रुतम् गर्तसदमिति गर्तऽसदम् युवानम् मृगम् न भीमम् उपहत्नुम् उग्रम्। मृडा जरित्रे रुद्र स्तवानः अन्यम् ते अस्मत् नीति वपन्तु सेनाः॥ ८ ॥

सा० भा० हे मदीयवचः श्रुतं प्रसिद्धं रुद्रं स्तुहि। कीदृशं गर्तसदं गर्तसदृशे हृदयपुण्डरीके सर्वदा तिष्ठन्तम्। "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति स्मृतेः। युवानं नित्य तरुणम्। उपहत्नुमुग्रं प्रलयकाले सर्वं जगत् संहर्तुमुग्ररूपिणम्[1]। तत्र दृष्टान्तः। भीमं मृगं न। भयंकरं सिंहमिव। यथा गजविदारणाय उग्रः सिंहो भवति तद्वत्। हे रुद्र स्तवानोऽस्मद्वचसा स्तूयमानो जरित्रे जरणशीले दिने दिने क्षीयमाणेऽस्मच्छरीरे मृड सुखं कुरु। ते त्वदीयाः सेनाः अस्मदन्यं वैरिणं निवपन्तु विनाशयन्तु॥ ८ ॥

भ० भा० भा० स्तुहि श्रुतमित्यस्य वैयाघ्र ऋषिः। त्रिष्टुप् छन्दः। रुद्रो देवता। विग्रहस्यात्युग्रत्वाद्भीत्या पूर्वार्धेन देवं परोक्षीकृत्याह॥

---

१ ग० क० रूपधारिणम्।

स्तुहि श्रुतमिति । आत्मन एवायमन्तरात्मनः प्रैषः भिद्यते च वाक्यम् । हे मदीयान्तरात्मन् स्तुहीति । यद्वा पुरुषव्यत्ययः । ईदृशं त्वां स्तवानीति । श्रुतं व्याख्यातम् । गर्त्तसदं गर्त्तमिति रथनाम तत्र सीदति तिष्ठतीति त्रिपुरदहनादाविति गर्त्तसत् । यद्वा । हृदयाभ्यन्तरं गर्त्तम् । केचिदाहुः "गिरति कवलयति विश्वमिति गर्त्तं विश्वस्यावारकस्तेजोविशेषःकश्चित्" इति । अन्ये आहुः "गीर्यंतेऽग्निना भक्ष्यन्ते प्रजाः अत्रेति गर्त्ते स्मशाने" इति । "शब्दवानाकाशो गर्त्तम्" इत्यपरे । युवानं नित्यतरुणम् । "युवा पिता स्वपा रुद्र एषां" इति च मन्त्रान्तरम् । मृगं न भीमम् । मृगः सिंहादिः सिंह एव वा मृगराट् तमिव भीमं भयङ्कररूपम् । उपरिष्टादुपचारत्वादुपमार्थीयो नशब्दः । उपहत्नुम् । उपसंहर्तव्यानां शत्रुप्रभृतीनां उपसंहरणायोद्यतम् । कृहनिभ्यां क्नुरिति क्नुप्रत्ययः । छान्दसस्तकारोपजनः । उग्रम् । अनभिभवनीयमुद्गूर्णं च । "उपसंहर्त्तृ मृत्युं" इति केचित् । उग्रं मृत्युसदृशमित्यर्थो वेदितव्यः । एवंविधं भगवन्तं स्तुहीति । द्वितीयोऽर्धर्चः प्रत्यक्षकृतः देवसंकीर्त्तनेन किञ्चिद्व्यपेतत्वात्तुभयस्य । अत्र देवसकाशात्सुखमाशास्ते । मृड मृडय सुखय । पूर्ववद्दीर्घत्वम् । जरित्रे स्तोत्रे । पूर्ववत्संप्रदानत्वाच्चतुर्थी । जरितारं मां मृडयेत्यर्थः । जॄष् वयोहानौ दिवादिः । ज्वरादिराधृषीयः स्तुतिकर्मा छन्दसि । उदात्तयण इति विभक्तेरुदात्तत्वम् । स्तवानः स्तोतव्यस्त्वम् । सम्यानच् स्तुव इति विधीयमानो वहुलवचनात्केवलादपि भवति न च भवति । किञ्च तव सेनाः अनुचरसंघाताः । जगत्क्षोभकारिणो मरीचिनिचया वा अस्मदस्मत्तोऽन्यमन्यत्र निवपन्तु निघ्नन्तु । निवपतिर्वधकर्मा ॥ ८ ॥

अथास्य पुरश्चरणम् । एकरात्रमुपोष्य त्रिरात्रं निरन्तरं जपेत् । कृतपुरश्चरणो भवति । वैकङ्कतसमिधां विषतैलाक्तानां स्मशानाग्नौ लक्षं जुहुयात् । शत्रवो नश्यन्ति । शत्रुनामग्रहणं कृत्वा देवस्य सन्निधौ भस्मपाणिरयुतंजपेत् । तस्य शत्रोर्महाज्वरो भवति । श्वेतसिद्धार्थैरयुतं जुहुयात् । शत्रोर्मसूरिका जायन्ते ताभिरेव म्रियते । शत्रोर्गृहक्षेत्रादिषु मन्त्रेणानेनावटं खानयित्वा तत्र कल्पं रोमास्थिशर्करादिकं खातयेत् । तस्य शीघ्रं नाशो भवति । ध्यानम् । उद्यद्भास्करकोटिप्रकाशमादीप्तदहनमूर्द्धानम् । अम्बरनिलयं भीमं ध्यायेदभयं शिवं सुरौघनुतम् ॥ "शरभाकृतिर्देवो ध्यातव्य" इति केचित् ॥

## ॥ नवमीमृचमाह ॥

### परि॑णो रु॒द्रस्य॑ हे॒ति र्वृ॑णक्तु॒ परि॑त्वे॒षस्य॑ दु॒र्म॒तिर॑घा॒योः ।

अवं स्थिरा मघवंद्भ्यस्तनुष्व मीढ्वस्तोकाय तनंयाय मृडय इति ॥ ९ ॥

परीतिं नः रुद्रस्यं हेतिः वृणक्तु परीतिं त्वेषस्यं दुर्मतिरिति दुःऽमतिः अघायोरित्यंघऽयोः अवेतिं स्थिरा मघवंद्भ्य इति मघवंत्ऽभ्यः तनुष्व मीढ्वः तोकायं तनंयाय मृडय ॥ ९ ॥

सा०भा० हन्यतेऽनयेति हेतिरायुधं रुद्रस्य हेतिः नोऽस्मान्परिवृणक्तु परितो वर्जितान् करोतु । कदाचिदपि मा विध्यत्वित्यर्थः । त्वेषस्य क्रोधोज्ज्वलितस्य अघायोः अघं पापं प्रहाररूपं इच्छतो रुद्रस्य या दुर्मतिरुग्रबुद्धिः साप्यस्मान् परिवृणक्तु । स्थिरा विरोधिनाशनाय यादृक् दुर्मतिरस्ति तां मघवद्भ्यो हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्यः सकाशादवतनुष्व अवततोम् अपनीतां कुरु । हे मीढ्वः कामाभिवर्षक तोकायास्मत्पुत्राय तनयाय तदीयपुत्राय च मृडय सुखं देहि ॥ ९ ॥

भ० भा० भा० परिणो रुद्रस्येत्यस्य छन्दस्त्रिष्टुप् । ऋषिर्देवता च भगवानेव । अत्रापि विग्रहस्य पूर्ववदुग्ररूपत्वात्परोक्षप्रत्यक्षकृतत्वमर्धर्चयोर्वाक्यभेदश्च ॥

परिणोरुद्रस्येति । हन्यतेऽनयेति हेतिरायुधम् । ऊतियूतीत्यादौ क्तिन्नन्तोदात्तो निपातितः । नोऽस्मान् रुद्रस्य हेतिः परिवृणक्तु सर्वतो वर्जयतु । पुत्रपौत्रसहितानित्यर्थः । वृजीवर्जने रौधादिकः । उपसर्गाद्बहुलमिति णत्वम् । किञ्च त्वेषस्य क्रोधोज्ज्वलितस्य देवस्य । त्विष दीप्तौ पचाद्यच् । अघायोः अघं व्यसनं पुरुषाणां पापकारिणां इच्छतीत्याघायुः । छन्दसि परेच्छायामपीति क्यच् । अश्वाघस्यादित्यात्वम् । क्याच्छन्दसीत्युप्रत्ययः । तादृशस्य देवस्य या दुर्मतिः निग्रहात्मिका बुद्धिः सा चास्मान्परिवृणक्तु निग्राह्याः पापकर्मिणो वयं मा भूमेति प्रार्थितं भवति । कृदुत्तरपदप्रकृतिस्वरत्वेन मतिशब्देऽन्तोदात्तत्वम् । मन्त्रे वृषेति क्तिन् । उदात्तत्वात् । किञ्च । स्थिरा स्थिरम् । सुपां सुलुगिति द्वितीयैकवचनस्याकारः । धनुषि वर्त्तते स्थिरत्वयोगात् । “इमा रुद्राय स्थिरधन्वने” इत्यादौ च दर्शनात् । अवतानस्य च ज्याविषयत्वात् । अयमर्थः स्थिरधनुरवतनुष्व ततज्यं कुरु शिथिलयेत्यर्थः । यद्वा वचनव्यत्ययेनैकस्मिन्बहुवचनं । शेश्छन्दसीति शेर्लोपः । स्थिराणि धनूंष्यवततज्यानि कुर्विति सन्त्येव वा

१ क्ष० नाशिनी दृक् । २ क्ष० ग० ङ० अवतर ।

देवस्य कार्यवशेन बहूनि धनूंषि तानि सर्वाण्यवतनुष्वेति। क्षेमाय प्रार्थयामः। मघवद्भ्यः मघवदर्थम्। मघमिति धननाम। हविर्लक्षणेन धनेन तद्वन्तो मघवन्तः तदर्थं त्वं धनुः अवतनुष्व तान्माहिंसीरित्यर्थः। को नाम मघवतो हिनस्तीति चेत्। अयं भावः। यथा हविष्मन्तो वयं निर्भयाः तव यष्टारः स्याम तदर्थमवतनुष्वेति। अपर आह "स्थिरग्रहणेन दुर्मतिर्विशिष्यते। या स्थिरा निश्चलकल्पा दुर्मतिरस्मै न दातव्या" इति। तां मघवद्भ्योऽवतनुष्व मघवतां कृते तां शिथिलय। मघवत्सु तादृशमध्यवसायं मा कृथा इति यावत्। स्थिरशब्दात्सुपांसुलुगिति द्वितीयैकवचस्य लुक् सांहितिको वा मकारस्य लोपः। "स इमं द्रास्विति" यथा अनवधारणाद्यथाश्रुतमेव पदकारा मन्यन्ते। इदं चापरं याचामहे। हे-मीढ्वः सेक्तः। व्याख्यातो मीढ्वान्। मतुवसोरिति रुत्वम्। तोकाय पुत्राय तनयाय तत्पुत्राय च मृडय सुखय। पूर्ववत् कर्मणः संप्रदानत्वम्। मृड सुखने। इगुपधलक्षणः कः। मृडं करोतीति णिच्। यद्वा हेतुमण्णिचि संज्ञापूर्वको विधिरनित्य इति लघूपधलक्षणो गुणो न क्रियते॥ ९॥

अथास्यमन्त्रस्य पुरश्चरणम्। कृच्छ्रं चरित्वा नव दिनानि प्रतिदिनमष्टसहस्रं जपेत्। कृतपुरश्चरणो भवति। अनेन पुत्रकामानामेव कर्त्तव्यम्। एतदपि गुप्तं कुर्यात्। दावानलरूढस्य पलाशखदिरादेः समिधां दधिमधुघृताक्तानां पश्चिमद्वारे शिवालये त्वयुतं जुहुयात्। शिवसदृशं पुत्रं लभते। देवालयेऽश्वत्थछायायामात्मगृहगोष्ठयोर्वा आर्द्रायाममावास्यायां वा कृष्णपक्षेऽष्टम्यां वा प्रारम्भः। पूर्वेद्युश्चरुभोजिनौ दम्पती भवतः। प्रतिमन्त्राक्षरं कलशांस्तन्तुवेष्टितान् जलपूर्णान्प्रतिष्ठाप्य तेषां मध्ये कुंभमुच्चैस्तरं निधाय तस्मिन्देवं सोममावाहयेत्। 'आयातु भगवान्कैलासात्' इति आवाह्य गन्धादिभिरभ्यर्च्य ततः पूर्ववन्मध्यकलशमारभ्य प्रतिकलशं मन्त्रादित एकमेकमक्षरं न्यसेत्। ततो नवसहस्रं जपेत्। तत उद्देशकाग्नौ श्यामाकलाजानां मधुघृताक्तानामष्टसहस्रं हुत्वा तन्मात्रमाज्येन च हुत्वा तत आदिकलशमादाय तत्तदक्षररूपिणं भगवन्तं स्मरन् स्नापयेत्। एकासनमेतौ प्रतिष्ठाप्य कुम्भजलेन च स्नापयित्वा ब्राह्मणानष्टसहस्रमष्टशतं वा एकशतमन्ते भोजयेत्। तत्र कलशवस्त्रव्रीह्यादीनाचार्याय दत्वा तं भोजयित्वा दक्षिणाकाले पञ्चनिष्कं त्रयं वा दद्यादेवं रूपाया दक्षिणायाः किञ्चिदपि न्यूनं न भवेदेवं दत्वा दम्पती भुञ्जीयातामेवं तयोः पुत्रः शिवतमो दीर्घायुरुत्पद्यते। अथ पूर्वोक्तकर्माशक्तावपरमुच्यते। अशक्तो मन्त्रमिमं जपेत्। पश्चिमद्वारं देवालये अहोरात्रं प्रदक्षिणं कुर्यात्। उदयात्प्रभृत्यास्तमयादस्तमयात्प्रभृत्योदयात्तत्र विघ्नो यदि विद्यते अशक्ता न सन्ति चेत्। शक्तः सन्नशक्तमात्मानं मत्वा

कुर्वन् नश्यति । तस्मात्पुरश्चरणयुक्तो गुरुरप्रमत्तः कुर्यादिति । अशक्तानां प्रजाकामानामगतीनामनुग्रहं वक्ष्यामः । अष्टशतमेकचत्वारिंशदेकाविंशतिं वा दिनानि दीक्षित्वा चरुभोजी पश्चिमद्वारालये प्रतिदिनं अष्टशतं जपेत् । प्रदक्षिणमष्टशतं कुर्यात् । नित्यवदश्वत्थस्य पूर्वोत्तरमूलादारभ्याष्टसहस्रं जपेत् । अश्वत्थचतुर्दिक्षु प्रतिदिनमष्टसहस्रं जपेत् । एवं समाप्य यावच्छक्ति तावद्वा ब्राह्मणान् दीक्षायुक्तान् भोजयेदेवंकृते वंशकरं पुत्रं लभत इति । ध्यानम् । गजचर्मावृततनुं स्फुरत्प्रहरणोज्ज्वलम् । सर्वपापहरं ध्यायेद्देवं कुञ्जरभेदिनमिति ॥

॥ दशमीमृचमाह ॥

मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि इति ॥ १० ॥

मीढुष्टमेति मीढुःऽतम शिवतमेति शिवऽतम शिवः नः सुमना इति सुऽमनाः भव । परमे वृक्षे आयुधम् निधायेति निऽधाय कृत्तिम् वसानः एति चर पिनाकम् बिभ्रत् एति गहि ॥ १० ॥

सा० भा० हे मीढुष्टम अतिशयेन सेचक कामाभिवर्षक । हे शिवतम अतिशयेन शान्तस्वरूप । नोऽस्मान् प्रति शिवः शान्तः सुमनाः सौमनस्येन स्नेहेन युक्तश्च भव । आयुधं त्रिशूलादिकं परमे अत्युन्नते[1] वृक्षे वटाश्वत्थादिरूपे[2] निधाय यथास्माभिर्न दृश्यते तथावस्थाप्य कृत्तिं वसानः व्याघ्रचर्ममात्रं परिदधानः आचर अस्मदाभिमुख्येनागच्छ । आगच्छन्नपि पिनाकं बिभ्रत् भूषणार्थं धनुर्मात्रं हस्ते धारयन् बाणादिकं परित्यज्य आगहि आगच्छ ॥ १० ॥

भ० भा० भा० मीढुष्टमेत्यस्य वैराज ऋषिः । पञ्चपदा त्रिष्टुप् छन्दः । यथाहुः "चतुर्भिरष्टाक्षरैर्द्वादशाक्षरेण चैतत्त्रिष्टुप्" इति । तत्र तृतीयव्यतिरिक्ताश्चत्वारोऽष्टाक्षराः । देवता शम्भुरेव ॥

मीढुष्टमेति । हे मीढुष्टम अतिशयेन सेक्तः । उत्तमपुंस्त्वेति यावत् । व्याख्यातं चेदम् । हे शिवतम अतिशयेन शिवंकर । प्रथमस्यामन्त्रितस्यावि-

---

१ ख० ग० ङ० अभ्युन्नते । २ ग० ङ० त्यादेरुपरि निधाय ।

घमानत्वात् न द्वितीयमपीदं निहन्यते। द्वयोः पाक्षिकमाद्युदात्तत्वम्। इत्थं देवेन कर्त्तव्यमित्याह नः अस्माकं सन् आस्माकीनो भूत्वा तिष्ठन् शिवः। सुमनाः भव। अस्माकमपि शिवं कुरु अस्माकमपि शोभनं मनः कुरु। उपकरोमीत्येवं वर्त्तस्वेति यावत्। सोर्मनसि इत्युत्तरपदाद्युदात्तत्वम्। तदर्थमित्थं देवेन कर्त्तव्यमित्याह। परमे उच्छ्रिते वटकर्णिकारादौ त्वदीये वृक्षे आयुधं त्रिशूलादिकं भीषणं निधाय क्षेमं निक्षिप्य। यत्र निहितं वयं न पश्यामः। यद्वा परमे दूरप्रदेशे वृक्षादौ अस्मद्दृष्ट्यगोचरे निधाय कृत्तिं वैय्याघ्रं चर्म वसानः परिदधानः आचर वर्त्तस्व। यद्वा अस्मदाभिमुख्येनागच्छ। वसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम्। किञ्चागच्छंस्त्वं पिनाकं केवलं ज्याबाणरहितं दण्डमात्रं भूषणमात्रं हस्ते बिभ्रदागहि। आगच्छास्मान्प्रति। गमेर्बहुलं छन्दसीति शपो लुक्। बिभर्तेः शतरि अभ्यस्तानामादिरित्याद्युदात्तत्वम्॥ १०॥

अथास्य पुरश्चरणम्। एकरात्रं पञ्चदशसहस्रं जपेत् कृतपुरश्चरणो भवति। अर्थनाशभये प्राणसंशये घोरार्त्तिभये वा चोरादिभये केवलाज्येन पञ्चसहस्राहुतीर्जुहुयात्। तेभ्यो मुच्यते। ध्यानम्। मङ्गलायतनं देवं युवानमतिसुन्दरम्। ध्यायेद्वनचराकारमागच्छन्तं पिनाकिनम् इति॥

## ॥ एकादशीमृचमाह ॥

विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः इति॥ ११॥

विकिरिदेति विऽकिरिद विलोहितेति विऽलोहित नमः ते अस्तु भगव इति भगऽवः। याः ते सहस्रम् हेतयः अन्यम् अस्मत् नीति वपन्तु ताः॥ ११॥

सा० भा० कीर्यन्ते भक्तानां सन्निधौ बहुधा प्रक्षिप्यन्त इति किरयो धनानि तानि ददातीति किरिदः। विशेषेण किरिदो विकिरिदः। विलोहितः लौहित्यरहितः श्वेत इत्यर्थः। अत एव मान्त्रिकाः पञ्चाक्षरध्याने स्मरन्ति। “ध्येयो मुक्तापरागामृतरसकलिताऽद्रिप्रभः” इति। यद्वा विशेषेण लोहितो विलोहितः। अतएवाष्टाक्षरध्याने स्मरन्ति। “काञ्चनाभो ध्येयः पद्मासनस्थ” इति। भगवः भगवन् षड्गुणसम्पन्न। भगशब्दस्य षड्गुणवाचित्वं स्मर्यते। “ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इती-

रणा"इति । प्रकारान्तरेण भगवच्छब्दनिर्वचनं च । "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवान्" इति । यथोक्तविशेषणत्रयविशिष्ट हे रुद्र ते तुभ्यं नमोऽस्तु । ते तव सहस्रं सहस्रसंख्याका या हेतयो यान्यायुधानि सन्ति ताः सर्वाः अस्मदन्यं विरोधिनं निवपन्तु विनाशयन्तु ॥ ११ ॥

भ०भा०भा० विकिरिदेत्यस्य मन्त्रस्य ऋषिः पुलहः । छन्दोऽनुष्टुप् । शम्भुर्देवता ॥

विकिरिदेति । हे विकिरिद विकिरिदशब्दो व्याख्यातः । किरतिर्हिंसाकर्मा । किरिं हिंसां ददतीति किरिदान्यायुधानि तद्रहितो वा विकिरिदः । परमार्थतः परपीडनान्यायुधानि तव न सन्तीति भावः । यद्वा । विविधं हिंसन्ति प्राणिन इति विकिरयः पापव्याधयः संसारादयः तेषां दाता खण्डयिता विकिरिदः । दो अवखण्डने । आमन्त्रिताद्युदात्तत्वम् । "विकीर्येषून्हन्तव्यान् खण्डयतीति विकिरिद" इति केचित् । हे विलोहित । विगतलौहित्यमर्धं यस्य सः विलोहितः । अर्धे नीलोऽर्द्धान्तरे लोहित इति कृत्वा । उक्तं च । "दरिद्रं नीललोहित "इति । " पुरुषं कृष्णपिङ्गलं" इति च मन्त्रान्तरं केचिदाहुः । विगतं लौहित्यं कालुष्यं यस्य सः विलोहितः निर्विकार इति । परमार्थतः तव विकारहेतवः क्वापि न सन्ति । दूरे हि मन्युप्रभृतयो विकाराश्चित्तकालुष्यप्रभवाः । यत्रायुधानि गृह्णीरन् तैश्च प्राणिनो निगृह्णीरन्निति भावः । एतदेव प्रकटयन्नाह । भगशब्दस्य षड्गुणवाचित्वं स्मर्यते । " उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवान्" इति । भगवः हे भगवन् तुभ्यं नमोऽस्तु । "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चापि षण्णां भग इतीरणा" । मतुवसोरुरिति रुत्वम् । पूर्वपदाद्युदात्तत्वं प्रथमयोरामन्त्रितयोः । एवमेकमप्यायुधं परमार्थतस्तव नास्ति अथापि जगदुपसंहारादौ यास्ते सहस्रं हेतयः यानि सहस्रसंख्याकान्यायुधानि विद्यन्ते ताः अस्मत् अस्मत्तः अन्यं निवपन्तु निघ्नन्तु त्वत्प्रसादात् । यद्वा । कोऽपि विकारहेतुः परमार्थतस्तव नास्ति अथापि यास्ते सहस्रं हेतयः हिंसाः निष्कर्मणां निग्रहप्रकारास्ता अस्मत्तोऽन्यं निवपन्तु पीडयन्तु । निग्राह्या वयं तव मा भूमेति प्रार्थयते ॥ ११ ॥

अथास्य पुरश्चरणम् । त्रिरात्रं चरुभोजी दशसहस्रं जपेत् । तदन्ते दशसहस्रं प्रदक्षिणाः कुर्वन् जपेत् । कृतपुरश्चरणो भवति । अनेन महाजनविरोधे सकलसंघातं दधिमधुघृताक्तानां समिधामयुतं जुहुयात् । भयं न भवति । सर्वाञ्जेतुकामोऽपामा-

र्गसमिधां कपिलाज्यसिक्तानां शतसहस्रमाहुतीर्जुहुयात् । एतेनैव वराहादयो वश्या भवन्ति । तिरश्चो जेतुकामो बिल्वसमिधां दधिमधुघृताक्तानां शतसहस्रमाहुतीर्जुहुयात् । अपो जेतुकामो जलस्य मध्ये आत्माग्निमाधाय कापिलेन पयसा शतसहस्रमाहुतीर्जुहुयात् । अद्भ्यो भयं न जायते । एवमन्यदपि यद्यज्जेतुकामो भवति तत्तन्नामग्रहणं कृत्वा कापिलाज्येन शतसहस्रं जुहुयात् । तत्तत्सर्वं जयति । ततो ध्यानम् । प्रसन्नवदनं सौम्यं रचितोद्वाहमण्डनम् । अम्बया सहितं ध्यायेत्सुरसंघैरभिष्टुतम् इति ॥

॥ द्वादशीमृचमाह ॥

सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि इति ॥१२॥

सहस्राणि सहस्रधेति सहस्रऽधा बाहुवोः तव हेतयः । तासाम् ईशानः भगव इति भगऽवः पराचीना मुखा कृधि ॥ १२ ॥

सा० भा० हे रुद्र तव बाहुवोर्हस्तयोर्हेतयः सहस्रधा सहस्रप्रकाराः सहस्राणि सहस्रसंख्याका विद्यन्ते । धनुः खड्गत्रिशूलमित्येवं जातिभेदेन सहस्रप्रकारत्वम् । एकैकस्यां जातौ बहवः सहस्रसंख्याकाः । हे भगवः षड्गुणोपेत त्वं ईशानः समर्थः सन् तासां हेतीनां मुखा मुखानि शल्यानि पराचीना कृधि अस्मत्तः पराङ्मुखानि कुरु ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये दशमोऽनुवाकः ॥ १० ॥

भ० भा० मा० सहस्राणि सहस्रधेत्यस्य नारद ऋषिः । कण्वो वा ऋषिः । अनुष्टुप् छन्दः । रुद्रो देवता । राजोपद्रवशान्तौ विनियोगः ॥

सहस्राणि सहस्रधेति । सहस्राणि बहुतमाः सहस्रधा सहस्रप्रकाराः तव बाह्वोरवस्थिताः हेतयः आयुधानि । द्विवचनमतन्त्रमित्युक्तम् । यद्वा सत्स्वपि बहुषु सायुधेषु बाहुद्वयमेव प्रहारे व्याप्रियत इति बाह्वोरित्युक्तम् । तन्वादीनां छन्दसि बहुलमित्युवङादेशः । एकैकस्या एव वा सहस्रसंख्योपदश्यते । एकैकैव सहस्रं तव बाह्वोर्हेतय इति । अथ तव बाह्वोर्या हेतयो हिंसाप्रकाराः सहस्राणि

सहस्रधा च सन्तीति । हे भगवः तासां हेतीनां मुखा मुखानि पराचीनानि अस्मान्प्रत्यनभिमुखानि कृधि कुरु । तासां वा हिंसानां मुखानि उपक्रमानस्मदनभिमुखान्कुरु। ईशानस्त्वं सर्वेश्वरः । तासां वा हेतीनामीशानः मयोक्तुमुपसंहर्तुं यथेष्टविषये च प्रवर्त्तयितुं समर्थस्त्वमिति तासां मुखानि पराचीनानि कुर्विति गम्यत एव । शेश्छन्दसीति शेर्लोपः । करोतेर्लोटि बहुलं छन्दसीति-विकरणस्य शपो लुक् धिभावश्च । ईशेरनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वम्॥१२॥

अथास्य मन्त्रस्य पुरश्चरणमुच्यते। कृच्छ्रार्द्धं चरित्वा पञ्चदशसहस्रं जपेत् । कृतपुरश्चरणो भवति। अनेन मन्त्रेण पुरुषाणां राजोपद्रवशान्तिं कुर्यात्। शाल्मलीवैकङ्कतसमिद्भिर्व्रीहियवतिलानि सर्पिःसिक्तान्ययुतं जुहुयात् । उपद्रवा नश्यन्ति ।भगवतो दक्षिणामूर्तेः सन्निधौ शतसहस्रं जपेत्। प्रधानपुरुषमारणे वल्मीकमृत्तिकालिङ्गं कृत्वानेन मन्त्रेण यावच्छीर्णमभिषिञ्चेत् ततस्तां मृदमादाय नद्यां प्रक्षिप्य तत्तीरे स्वाग्नौ शुद्धतण्डुलैर्घृताक्तैरयुतं जुहुयात् तस्य मरणमुपशमयति। महाकान्तारगामी भस्माष्टसहस्रमभिमन्त्र्य सर्वं तेन शरीरमवलिप्य गच्छेत् । तस्य किमपि भयं न भवति । कृष्णचतुर्दश्यां रात्रौ स्मशाने बिडालमांसेन सौदनेन बलिमुपहरेत् "राक्षसेभ्यो बलिमुपाहरामि" इति । ततस्तेभ्यो भयं न विद्यते। महीशास्तुः कोपोपहतानां सुवर्णमहाशास्तुः सन्निधौ अनेनाष्टसहस्रमाज्येन जुहुयात् । कुक्कुटमांसेन बलिमुपहरेत्। तत्र नववसनानि सुवर्णादिकं च होमस्य दक्षिणां दद्यात् । निष्कत्रयमेकं वा राष्ट्रशतभागो वा दातव्य इति । अन्येषामपि दैवोपहतानामनेन मन्त्रेण सर्पिषा अष्टसहस्रं जुहुयात् । दैवोपद्रवा नश्यन्ति । ततो ध्यानम् । सर्वपापहरं देवं सर्वाभरणभूषितम् । सर्वायुधधरं ध्यायेत्सर्वलोकमहेश्वरम् ॥

इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये श्रीरुद्रप्रश्ने दशमोऽनुवाकः॥१०॥

॥ इति दशमोऽनुवाकः ॥

---

दशमेऽनुवाके ऋग्रूपाः केचिन्मन्त्रा उक्ताः । अथैकादशे शिष्टा ऋचः शिष्टानि यजूंषि चोच्यन्ते । तत्रादौ दशसंख्याका ऋचः ॥

## ॥ प्रथमामृचमाह ॥

**सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि इति ॥ १ ॥**

सहस्राणि सहस्रश इति सहस्रऽशः ये रुद्राः अधीति भूम्याम् । तेषाम् सहस्रयोजन इति सहस्रऽयोजने अवेति धन्वानि तन्मसि ॥ १ ॥

सा० भा० भूम्यामधि भूमेरुपरि ये रुद्राः सहस्रशः सहस्रप्रकाराः सहस्राणि सहस्रसंख्याकाः सन्ति । सहस्रश इति जात्युक्तिः । विनायकप्रमथशैला-दादयो जातिभेदास्ते सर्वेऽपि रुद्रविशेषाः । तत्राप्येकस्यां जातौ बहुभिः सहस्रैः संख्याता मूर्त्तिविशेषास्तेषां सर्वेषां धन्वानि धनूंषि सहस्रयोजने अ-स्मत्तः सहस्रयोजनव्यवहितदेशे अवतन्मसि अवततज्याकानि स्थापयामः॥१॥

म०भा०भा०सहस्राणि सहस्रश इत्यानुष्टुभोऽनुवाकोऽवतानसंज्ञको दशर्चः । तेषां सहस्रयोजन इति सर्वत्रानुषज्यते । जपादौ आद्यन्तयोस्त्वाम्नायते । नमो रुद्रेभ्य इत्यादीनि त्रीणि यजूंषि । अत्राहुः। "ब्रह्मणा प्रार्थितेन देवेन सृष्टा देवतुल्या रुद्राः सर्वेषां स्थावरजङ्गमानां रक्षणपोषणोपसंहारादि कुर्वाणाः कर्मानुरूपं फलं प्रापयन्तः सर्वत्र ब्रह्माण्डे नानारूपा वायुभूता रश्मिमनुष्यादिरूपाश्चा-धिवसन्ति त इदानीं प्रसाद्यन्ते" । अन्येत्वाहुः । "देवोऽयमनुग्राह्यवशेन शतधा सहस्रधा शतसहस्रधात्मानं विभज्य प्रत्येकं दर्शनाभिमतप्रदानादिकमनुग्रहं करोति । ते च तथा विभक्ता अनादौ संसारे असंख्याता अनुग्रहाय जगतः प्र-वर्त्तन्ते । तानधिकृत्यैते मन्त्राः प्रवर्त्तन्ते" इति । अन्येत्वाहुः"संहर्तुर्देवस्य क्रो-धात्मविस्फुलिङ्गाः प्राणिनोऽभिमन्यमानाः सर्वेषु लोकेषु संचरन्ति तेषा-मियं प्रसादना"इति । "रुद्रसदृशा गणेश्वरा रुद्राः" इत्यपरे । तत्रादौ चतुर्णां मन्त्राणां दुर्वासा ऋषिः । शेषाणां देवलऋषिः अनुष्टुप् छन्दः । सर्वेषां रुद्र एव देवता ॥

तत्र प्रथमा । सहस्राणि सहस्रश इति । सहस्राणि अनेकसहस्र-परिमाणाः । सहस्रशः सहस्रं सहस्रं भूत्वावस्थिताः । संख्यैकवचनाच्च वीप्सा-यामिति शस् । एकैकशोऽनेकसहस्रसंख्यापरिमिता अनेकसहस्रात्मानः सन्तः ये रुद्रा अधिभूम्यां भूमेरुपरि वर्त्तन्ते । अधिरुपरिभावे । यद्वा अधिरैश्वर्ये अधिभूम्यां भूमेरीश्वरा इत्यर्थः । अधिरीश्वरे इति कर्मप्रवचनीयत्वम् । यस्मा-दधिकं यस्य चेश्वरवचनमिति सप्तमी । कर्मानुरूपं प्राणिनो निगृह्णन्तोऽनुगृ-ह्णन्तश्च ये पृथिव्यामीशितृत्वेन वर्तन्ते तेषां धन्वानि धनूंषि अवतन्मसि अवतन्मः अवततज्यानि कुर्मः । इदन्तो मसिः । स्तुतिभिर्नमस्कारैर्हविर्भिश्च प्र-

साद्यामस्तान् यथा धनूंष्यवतत्य शान्ता भवन्तीतिभावः। सहस्रयोजने यो-जनानां सहस्रं सहस्रयोजनम्। अष्टौ धनुःसहस्राणि योजनम्। अयमर्थः। यत्राह-मस्मि तत्र समन्तात्सहस्रयोजनादर्वाग्वर्तमानानां तेषां धनूंष्यवतन्मः ततः परस्तात्त्वधिज्यधन्वन एव तिष्ठन्त्विति। अथवा योजनानां सहस्रमतीत्य वर्त्तमानानामपि तेषां धनूंष्यवतन्मः किं पुनस्ततोऽर्वाग्वर्त्तमानानामिति ॥ १ ॥

॥ द्वितीयामृचमाह ॥

अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि ॥ २ ॥

अस्मिन् महति अर्णवे अन्तरिक्षे भवाः अधि ॥ २ ॥

सा० भा० अस्मिन् दृश्यमाने महत्यर्णवे महासमुद्रसदृशे प्रौढेऽन्तरिक्षेऽधि-श्रित्य वर्तमाना भवाः रुद्रमूर्तिविशेषाः ये सन्ति तेषां सहस्रयोजन इत्याद्यु-क्तार्थमुत्तरार्धं द्वितीयादिषु नवमान्तास्वृक्षु अनुषज्यते। तदनुषङ्गद्योतनायैव दशम्यामृचि पुनः पठितम् ॥ २ ॥

भ० भा० भा० अथ द्वितीया। अस्मिन्महत्यणर्व इति ये इत्यध्याह्रियते। अस्मिन्महति अधिकेऽर्णवे। अर्णसा वृष्ट्युदकेन तद्वति। अन्तरिक्षे। अर्णसो लोपश्चेति मत्वर्थीयो व प्रत्ययः। अधि उपरि वर्त्तमाना अन्तरिक्षस्येश्वरा वा ये भवा रुद्राः। तेषामित्यादिगतम्। अथवा "अर्णवे समुद्रे अन्तरिक्षे च ये भवा" इत्येके। द्यावापृथिव्योरन्तरा मध्ये क्षियति निवसतीत्यन्तरिक्षम्। पृषोदरादिः ॥ २ ॥

॥ तृतीयामृचमाह ॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधःक्षमाचराः ॥ ३ ॥

नीलग्रीवा इति नीलऽग्रीवाः शितिकण्ठा इति शितिऽक-ण्ठाः शर्वाः अधः क्षमाचराः ॥ ३ ॥

सा० भा० ग्रीवायामेकस्मिन् प्रदेशे नीलवर्णाः नीलग्रीवाः प्रदेशान्तरे श्वेत-वर्णाः। शितिकण्ठाः तादृशाः शर्वाः रुद्रमूर्त्तिविशेषाः। कीदृशाः। अधःक्षमा-चराः भूमेरधस्तात्पातालेषु सञ्चरन्ति तेषामित्यादि पूर्ववत् ॥ ३ ॥

भ०भा०भा० अथ तृतीया। नीलग्रीवा इति। अत्रापि ये इत्यध्याह्रियते। नीलग्रीवाः शितिकण्ठा इति। गते। अधःक्षमाचराः पृथिव्या अधः पाताललो-के ये चरन्ति ईश्वरत्वेन वर्त्तन्ते। शर्वा रुद्राः। तेषामित्यादि समानम् ॥ ३ ॥

॥ चतुर्थीमृचमाह ॥

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ॥ ४ ॥

नीलग्रीवा इति नीलऽग्रीवाः शितिकण्ठा इति शितिऽकण्ठाः दिवम् रुद्राः उपश्रिता इत्युपऽश्रिताः ॥ ४ ॥

सा॰ भा॰ दिवमुपश्रिताः स्वर्गे वर्तमानाः ॥ ४ ॥

म॰ मा॰ भा॰ अथ चतुर्थी। नीलग्रीवा इति। ये इत्यध्याहार्यमेव। नीलग्रीवाः शितिकण्ठा रुद्राः दिवमैन्द्रादिलोकमुपश्रिताः स्वामित्वेन उपसंप्राप्ताः। तेषामित्यादि स्पष्टम्। कर्त्तर्यपि व्यत्ययेन क्तः। गतिरनन्तर इति पूर्वपदप्रकृतिस्वरत्वम् ॥ ४॥

एषां चतुर्णां मन्त्राणां पुरश्चरणादिकं ब्रूमः। चान्द्रायणं चरित्वा कायशोधनार्थं पञ्चसहस्रं जपेत्। ततः कृतपुरश्चरणो भवति। आभिचारिकं कर्म मन्त्रैरेतैः कुर्यात्। राजा ब्राह्मणैः स्वदेशजातैर्होमं कुर्यात्। शाल्मलीसालवेत्रवेणुशराणामर्कतूलवेष्टितानां शशरुधिराक्तानां शतसहस्रं जुहुयात्। अत्र पिष्टेन स्निग्धेन सूक्ष्मेण शत्रुप्रतिकृतिं कृत्वा प्राणान्संस्थाप्य क्रमेण छित्त्वाऽष्टसहस्रं जुहुयात्। ततः शशरुधिरेणाक्तान् कूर्चानष्टसहस्रं जुहुयात्। एतैः प्रयोगैः शत्रवो नश्यन्ति। एतैरेव मन्त्रैरभिचारं प्रतिकुर्वाणो दूर्वाणां दधिमधुघृताक्तानां पञ्चसहस्रं जुहुयात्। राज्ञस्तस्याभिचारदोषा नश्यन्ति कारयितुः। ततो ध्यानम्। दंष्ट्राकरालवदनं ज्वलज्ज्वलनमूर्द्धजम्। बिभ्राणं त्रिशिखं दीपं ध्यायेद्भुजगभूषणम् ॥

॥ पञ्चमीमृचमाह ॥

ये वृक्षेषु सस्पिञ्जरानीलग्रीवा विलोहिताः ॥ ५ ॥

ये वृक्षेषु सस्पिञ्जराः नीलग्रीवा इति नीलऽग्रीवाः विलोहिता इति विऽलोहिताः ॥ ५ ॥

सा॰ भा॰ यथा लोकेष्ववस्थिता रुद्रास्तथा वृक्षेष्वपि स्थिताः। तेषु केचित् सस्पिञ्जराः शष्पवत् बालतृणवत् पिञ्जरवर्णाः। नीलग्रीवाः नीलवर्णग्रीवाः। केचित् "ग्रीवादेशे नीलवर्णोपेताः"। अपरे पुनर्विलोहिताः विशेषेण रक्तवर्णाः। ईदृशा ये सन्ति तेषामित्यादि ॥ ५ ॥

भ०भा०भा० अथ पञ्चमो मन्त्रः। ये वृक्षेष्विति। वृक्षेषु स्थावरजङ्गमात्मसु जीवेषु वृक्षेष्वेव वा ये रुद्राः। सस्पिञ्जराः शष्पपिञ्जराः शष्पं बालतृणम्। लोकपीडकानां जरयितारः नीलग्रीवाः नीलकण्ठाः। विविधलोहिताः विगतकालुष्या वा। स्वामित्वेन रक्षितृत्वेन चाधिकाः सन्ति तेषामित्यादि सुबोधम्॥५॥

॥ षष्ठीमृचमाह ॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥ ६ ॥

ये भूतानाम् अधिपतय इत्यधिऽपतयः विशिखास इति विऽशिखासः कपर्दिनः ॥ ६ ॥

सा० भा० भूतशब्देनान्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गणविशेषा उच्यन्ते। तेषामधिपतयो ये रुद्राः तेषु केचिद्विशिखासः मुण्डितमूर्धानः। अपरे कपर्दिनो जटाबन्धोपेतास्तेषामित्यादि ॥ ६ ॥

भ० भा० भा० अथ षष्ठो मन्त्रः। ये भूतानामिति। भूतानां पञ्चमहाभूतानां गणानां वाधिपतयो ये रुद्राः प्रवृत्तिनिवृत्तिहेतुभूतास्तत्सुखदाश्च तेष्वधिवसन्ति। विशिखासः शिखा रहिताः विविधशिखा वा विविधरश्मयो वा। निरुदकादित्वादुत्तरपदान्तोदात्तत्वम्। आज्जसेरसुक्। ये ईदृशाः ये च कपर्दिनः जटामुकुटधारिणः तेषामित्यादिगतमेव ॥ ६ ॥

॥ सप्तमीमृचमाह ॥

ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥ ७ ॥

ये अन्नेषु विविध्यन्तीति विऽविध्यन्ति पात्रेषु पिबतः जनान् ॥ ७ ॥

सा० भा० ये रुद्रा अन्नेषु भुज्यमानेषु गूढत्वेनावस्थिताः सन्तो जनान् विविध्यन्ति विशेषेण धातुवैषम्यादिना बाधन्ते। तथा पात्रेषु पातव्येषु क्षीरोदकादिषु गूढत्वेनावस्थिताः सन्तः पिबतो जनान् विविध्यन्ति। तेषामित्यादि ॥७॥

भ० भा० भा० अथ सप्तमः। ये अन्नेष्विति। ये रुद्राः अन्नेषु अदनीयेषु भुज्यमानेष्वोदनादिषु वस्तुषु तिष्ठन्तो विविध्यन्ति। अत्तॄन् पाप्मिनः धातुवैषम्यादिना विविधं पापानुरूपं व्याध्यादिभिर्यातयन्तीत्यर्थः। पात्रेषु पातव्येषु पयःप्रभृतिषु तिष्ठन्तो विविध्यन्ति पिबतः पायिनः। पिबत इत्युपलक्षणम्।

अन्ने तिष्ठन्तः । अदतः पात्रेषु तिष्ठन्तः विविध्यन्तीति । यद्वा । अन्नेष्वदनीयेषु तिष्ठन्तो विविध्यन्ति पात्रेष्वमन्नादिषु चषकादिषु तिष्ठन्त इति । तेषामित्यादि गतम् ॥ ७ ॥

एषां त्रयाणां पूर्ववत्पुरश्चरणादिकं सर्वम् ॥

## ॥ अष्टमीमृचमाह ॥

### ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा य॒व्युध॑ः ॥ ८ ॥

### ये प॒थाम् प॒थि॒रक्ष॑य इति पथिऽरक्ष॑यः ऐ॒ल॒बृ॒दाः य॒व्युध॑ः ॥ ८ ॥

सा० भा० ये रुद्राः पथिरक्षयः लौकिकवैदिकमार्गाणां रक्षकाः । नात्र केषांचिदेव मार्गाणां किन्तु सर्वेषां पथां ते च रक्षकाः । ऐलबृदाः इरा अन्नं तस्य समूह ऐरं ऐरमेव ऐलं तद्बिभ्रतीत्यैलभृतः ऐलभृत एव ऐलबृदाः । अन्नप्रदानेन पोषका इत्यर्थः । ते च यव्युधः यौति मिश्रीभवति विरोधं करोतीति युः शत्रुः । युभिः शत्रुभिः सह युध्यन्तीति यव्युधः । अस्मदनिष्टनिवारका इत्यर्थः । तेषामित्यादि ॥ ८ ॥

म० भा० भा० अथाष्टमः । ये पथामित्युभये पन्थानः । लौकिकाश्च वैदिकाश्च । तेषां पथां रक्षितारो ये रुद्रास्तेषामीशितारः तान् निरोद्धुं तैश्च प्राणिनः प्रस्थापयितुं समर्थाः । पथां सर्वेषां संबन्धिनः पथिरक्षय इति । समस्तव्यस्ताभ्यां प्रतिपाद्यते । यथा "वसूयवो वसुपते वसूनाम्" । "गवामसि गोपतिरेक इन्द्र" इति । "निधीनां त्वा निधिपति ᳫ हवामहे" इत्यादि । पथो रक्षन्ति । छन्दसि वनसनेत्यादिना इन्प्रत्ययः । ते विशेष्यन्ते पथामिति साकल्यप्रतिपादनार्थं वृत्तौ संख्याविशेषाप्रतिपत्तेर्वृत्त्यन्तर्भूतविशेषलाभायावृत्तिरपि समाश्रियत इति । ऐलबृदाः । इरा अन्नं रलयोरेकत्वं स्मर्यते । इलां बिभ्रति सन्मार्गवर्तिभ्यो दातुमिति इलाभृतः । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वे इलभृतः । प्रज्ञादित्वात्स्वार्थिकोऽण् । ऐलभृताः परोक्षत्वाय वर्णव्यापत्तिः क्रियते । 'परोक्षप्रिया' इति । चतुर्थप्रथमयोस्तृतीयौ । ऐलबृदाः । यद्वा अयस्मयादित्वेन पदत्वात्तकारस्य जश्त्वेन दकारः । वर्णव्यत्ययेन भकारस्य बकारः । अपर आहुः । इराणां समूह ऐरम् तस्य भर्तारः ऐलबृद इति । शेषं समानम् । वृणोतेर्वा संवरणकर्मणः । क्विपि दत्वादि समानम् । यव्युधः । यौतेर्विचि यो इतियुवशब्दपर्यायः । युवभिरेव युध्यन्ते इति यव्युधः । महाभूयांसः । छान्दसोऽवादेशः । यद्वा

युवशब्द एव समस्यते । स्थूलदूरेत्यादिना उत्तरपदे व्यत्येन यणादिपरं लुप्यते पूर्वस्य च गुणः पूर्ववदवादेशः । केचिदाहुः यूयन्ते मिश्रियन्ते शरीरेन्द्रियप्राणा अनेन इति । युवशब्देनायुरुच्यते तस्य संप्रहर्त्तारो यव्युधः। अकारलोपश्छान्दसः । एतदुक्तं भवति । लौकिकवैदिकमार्गेषु वर्त्तमानानां कर्मानुगुणं केभ्यश्चिदन्नमायुश्च ददति केभ्यश्चिदुभयमपहरन्ति केभ्यश्चिदन्नं दत्वायुरपहरन्ति केभ्यश्चिदायुर्दत्वान्नमपहरन्ति । अपरे तु ब्रुवते । यद्विध्यन्तीति यव्युधः । यद्वेध्यं तदेव विध्यन्तीति न कदाचिदतिक्रमकारिणः। विध्यतेर्विचि पूर्ववद्दन्त्योदात्तता धातोरुपधाया उकारः । तेषामित्यादि समानमेव ॥ ८ ॥

॥ नवमीमृचमाह ॥

ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ॥ ९ ॥

ये तीर्थानि प्रचरन्तीति प्रऽचरन्ति सृकावन्त इति सृकाऽवन्तः निषङ्गिण इति निऽसङ्गिनः ॥ ९ ॥

सा० भा० ये रुद्राः तीर्थानि काशीप्रयागादीनि रक्षितुं प्रचरन्ति । कीदृशा रुद्राः । सृकावन्तः सृकाः क्षुरिका हस्ते धार्यमाणास्तीक्ष्णाग्रा आयुधविशेषास्तद्युक्ताः केचित् । अपरे निषङ्गिणः खड्गयुक्ताः तेषामित्यादि ॥ ९ ॥

भ० भा० भा० अथ नवमः । ये तीर्थानीति । ये रुद्रास्तीर्थानि अविमुक्तादीनि प्रचरन्ति केभ्यश्चित्तीर्थफलं दातुं केभ्यश्चिन्निरोद्धुं सृकावन्तः आयुधवन्तः। अन्येषामपि दृश्यत इति दीर्घत्वम् । निषङ्गिणः खड्गवन्तः नितरां वा सङ्गवन्तः तेषामित्यादि सुबोधम् ॥ ९ ॥

अनयोः पुरश्चरणम् । कृच्छ्रं चरित्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवति । एताभ्यामृतुगमनदिने स्वाग्नावष्टसहस्रं कापिलेन पयसा सर्पिर्विमिश्रेण जुहुयात् । ततः ऋतुगामी भवेत् । तत्र विद्वान् वंशकरः पुत्रो जायते । एताभ्यामेव महातीर्थगमने स्वाग्नौ शुद्धतण्डुलैराज्यसिक्तैरयुतं जुहुयात् । तीर्थमनालपन् गच्छेत् स्नात्वागत्य स्वाग्निमाराध्य वाचं विसृजंस्तीर्थफलं यथार्थमश्नुते । ध्यानादि पूर्ववत् ॥

॥ दशमीमृचमाह ॥

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥ १० ॥

ये एतावन्तः च भूयांꣳसः च दिशः रुद्राः वितस्थिर इति विऽतस्थिरे । तेषाम् सहस्रयोजन इति सहस्रऽयोजने अवेति धन्वानि तन्मसि ॥ १० ॥

सा० भा० ये रुद्रा एतावन्तश्च सहस्राणि सहस्रश इत्याद्यृग्भिर्यावन्त उक्ताः तावन्तोऽपि । भूयांसश्च इतोऽप्यधिका अन्ये बहवोऽपि दिशः वितस्थिरे सर्वाः दिशः प्रविश्य स्थिताः तेषामित्यादि । इत्थं दशसंख्याका ऋच उक्ताः ॥१०॥

भ० भा० भा०अथ दशमः । य एतावन्तश्चेति । यावन्तो अमी उक्ताः सहस्राणि सहस्रश इत्यारभ्य ये तीर्थानीत्येवमन्तेषु मन्त्रेषु निर्दिष्टा रुद्रा एतावन्तश्च भूयांसश्च रुद्रा इतोऽपि बहुतराः दिशो वितस्थिरे सर्वा दिशो व्याप्य स्थिताः । यद्वा एतावन्तः । एतावत्तया परिच्छेत्तुमशक्याः । एतावद्भिर्वा भूयिष्ठत्वादिभिः परिच्छेदैः परिच्छिद्यमाना ये रुद्रा भूयांसश्च सर्वात्मना एतावत्तामतीत्य वर्त्तमाना दिशो वितस्थिर इति । छन्दसि लुङ् लङ्लिटि वर्तमाने लिट् । समवप्रविभ्यस्थ इत्यात्मनेपदम् । तेषामित्यादि व्याख्यातमेव पुनराम्नानं सर्वानुषङ्गप्रदर्शनार्थम् ॥ १० ॥

पुरश्चरणादिकं सर्वं पूर्ववद्द्रष्टव्यम् ॥

॥ अथ त्रीणि यजूंष्युच्यन्ते ॥

नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची र्दशोर्ध्वास्तेभ्यो नमस्तेनो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि इति ॥ ११ ॥

नमः रुद्रेभ्यः ये पृथिव्याम् ये अन्तरिक्षे ये दिवि येषाम् अन्नम् वातः वर्षम् इषवः तेभ्यः दश प्राचीः दश दक्षिणा दश प्रतीचीः दश उदीचीः दश उर्ध्वाः तेभ्यः नमः ते नः मृडयन्तु ते यम् द्विष्मः यः च नः द्वेष्टि तम् वः जम्भे दधामि ॥ ११ ॥

सा० भा० अत्र पृथिव्यादिलोकभेदादिषु भेदाच्च यजुस्त्रयं द्रष्टव्यम्। तदा एवं पाठः संपद्यते। नमो रुद्रेभ्य इत्युपक्रम्य ये पृथिव्यां येषामन्नमिषव इत्याद्यो मन्त्रः। येऽन्तरिक्षे येषां वात इषव इति द्वितीयो मन्त्रः। ये दिवि येषां वर्षमिषव इति तृतीयो मन्त्रः। तेभ्यो दश प्राचीरित्यादि सर्वत्र समानम्॥

ये रुद्राः पृथिव्यां वर्त्तन्ते तेष्वपि रुद्रेषु येषां रुद्रविशेषाणां अन्नमेव इषवो बाणाः अपथ्यान्नभक्षणे प्रवर्त्य वा अन्नार्थं चौर्यं कारयित्वा वा यान् हिंसन्ति तान् प्रति हिंसकानां रुद्राणामन्नमेव इषवः तेभ्यः पृथिव्यां स्थितेभ्योऽन्नबाणकेभ्यश्च रुद्रेभ्यो नमोऽस्तु। तथा ये रुद्रा अन्तरिक्षे वर्त्तन्ते तेषामपि मध्ये येषां वात इषवस्तीव्रेण वायुना रोगानुत्पाद्य हिंसन्ति तेभ्योऽन्तरिक्षवर्तिभ्यो वातेषुभ्यश्च रुद्रेभ्यो नमोऽस्तु। तथा ये रुद्रा दिवि वर्त्तन्ते तेष्वपि येषां रुद्रविशेषाणां वर्षमेवेषवः अतिवृष्टयनावृष्टिभ्यां प्राणिनो हिंसन्ति तेभ्यो दिवि स्थितेभ्यो वर्षेषुभ्यो रुद्रेभ्यो नमोऽस्तु। कीदृशो नमस्कार इति स एव विशेष्यते। दश प्राचीः प्राङ्मुखत्वेनाञ्जलिकरणे दशाङ्गुलयः प्रागग्रा भवन्ति। एवं दक्षिणादिषु ऊर्ध्वान्तेषु योज्यम्। ईदृशैरञ्जलिविशेषैस्तेभ्यो रुद्रेभ्यो नमोऽस्तु। ते च रुद्रा नोऽस्मान् मृडयन्तु सुखयन्तु। ते वयं नमस्कृतरुद्राः सन्तो यं वैरिणं तूष्णीमवस्थितमपि द्विष्मः यश्च वैरी नोऽस्मान् तूष्णीमवस्थितानपि द्वेष्टि। तमुभयविधं वैरिणं हे रुद्राः वो युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि॥ ११॥

भ०भा०भा० नमो रुद्रेभ्य इत्यादिर्याजुषो मन्त्रः। अस्य ऋषिर्भगवानेव। अनुष्टुबेव छन्दः। रुद्र एव देवता। अनेन मन्त्रेण पृथिव्यादिलोकत्रयवर्तिनो रुद्रान्नमस्कृत्य तेभ्यः आत्मनः सुखमात्मद्वेषिणां च विनिपातं प्रार्थयते। अत्र त्रयाणां यजुषां नमो रुद्रेभ्य इत्येतत्तेभ्यो दशेत्यादि च सर्वं समानम्। ये पृथिव्यां येषामन्नमिषव इति प्रथमस्य विशेषः। येऽन्तरिक्षे येषां वात इषव इति द्वितीयस्य। ये दिवि येषां वर्षमिषव इति तृतीयस्य।

नमो रुद्रेभ्यो ये पृथिव्यां वर्तन्ते येषामन्नमिषवः अन्नमेवेषुस्थानीयं हिंसासाधनमिति यावत्। तत्र कांश्चिदन्नं भक्षयन्तोऽपथ्याशनादिना व्याधीनुत्पादयन्तो विध्यन्ति। कांश्चिदनशनं कृत्वा बुभुक्षया विध्यन्ति। कांश्चिदन्नार्थं स्तेयादि कारयित्वा वधादिकं प्रापयन्ति। एवं दुष्कर्मसु हिंसासाधनं येषामन्नं तेभ्यो नमोऽस्त्विति। अथ नमस्कारो विशेष्यते। दश प्राचीः प्राच्योऽङ्गुलयो दश प्राङ्मुखाञ्जलिरूपा एवं दश दक्षिणा दक्षिणामुखाञ्जलिरूपा दश प्रतीच्यः

प्रत्यङ्मुखाञ्जलिरूपा दशोदीच्यः उदङ्मुखाञ्जलिरूपाः दशोर्ध्वाः ऊर्ध्वमुखाञ्जलिरूपा एवं प्रतिदिशमेभिरङ्गुलीभिर्यः क्रियते ईदृशोऽयं नमस्कारः तेभ्यो रुद्रेभ्योऽस्तु ते च नो मृडयन्तु। ते वयमीदृशं नमस्कारं कुर्वाणाः यं द्विष्मः। यश्च नोऽस्मानीदृशनमस्कारकारिणो द्वेष्टि तं वः युष्माकं जम्भे दन्ते।जातावेकवचनम्। जम्भेषु दधामि स्थापयामि। तं भक्षयत इत्यभिप्रायः। पार्श्ववर्तिनो दन्ता जम्भा इत्यन्ये। तेभ्यो नम इत्यादि पञ्चचोडासु व्याख्यात एवेति। अत्र प्राचीरुदीचीरित्येतयोः अनिगन्तोञ्चतावप्रत्यय इति गतेः प्रकृतिस्वरत्वम् । प्रतीचीरित्यत्र चावितिपूर्वपदान्तोदात्तत्वम्। प्राचीः प्रतीचीरित्यत्राच इत्यल्लोपे चाविति पूर्वपदस्य दीर्घत्वम्। उदीचीरित्यत्र उद ईदितीत्वम्। त्रिष्वपि वा छन्दसीति पूर्वसवर्णदीर्घत्वम्। केचित्कुर्म इत्यध्याहरन्ति। तेभ्यो दश प्राचीरङ्गुलीः कुर्मस्तथा दक्षिणाद्याः। एवं तेभ्यो नमस्कुर्मः नमस्कारं कुर्म इति। अन्येत्वाहुः। आदौ नमो रुद्रेभ्य इति वाचिको नमस्कारः कृतः तेभ्यो दशप्राचीरित्यादिकस्तु मध्ये कायिकः ततस्तेभ्यो नम इत्यन्ते मानसः। एवं कृत्वा ते नो मृडयन्त्वित्यादिना स्वाभिमतं प्रार्थयते इति ॥

अथ द्वितीयम्। नमो रुद्रेभ्य इति। ये अन्तरिक्षे स्थिताः येषां वात इषवः वात एव हिंसासाधनं वातस्य न्यूनातिरेकादिभिर्वृत्तिप्रकारैः प्राणिनो ये हिंसन्ति प्राणादीनां वा पञ्चानामयथावृत्त्युत्पादनेन ये प्राणिनः पीडयन्ति तेभ्यो दश प्राचीरित्यादिसमानमेव ॥

अथ तृतीयम्। नमो रुद्रेभ्यो ये दिवि स्थिताः येषां वर्षमिषवः इषुस्थानीयं हिंसासाधनम् अतिवृष्ट्यनावृष्ट्यादिभिः ये प्रजानां हिंसां कुर्वन्ति तेभ्यो दश प्राचीरित्यादि समानम् ॥ ११ ॥

अथास्य मन्त्रस्य पुरश्चरणम्। एकविंशतिदिनानि दीक्षित्वा पञ्च पञ्च दिनानि नान्यवस्तु भुञ्जीत आममेव सर्वं भवेत्। प्रथमपञ्चकं पयः। द्वितीयं फलम्। तृतीयं दधि। चतुर्थमपि फलम्। एक उपवासः। एवं चरित्वा एकविंशतिदिनानि हविष्याशी तिष्ठन् सदा जपेत् ततः पञ्च दिनानि गलप्रमाणजलस्थो भवेत्। एकदिनमघमर्षणविधानेन जपेत्। आचार्यस्य दशनिष्कं सुवर्णं दद्यात्। तत्समां च शुश्रूषां कृत्वा कृतपुरश्चरणो भवति। ततो नित्यवत्स्वाग्नौ अनेनाष्टसहस्रमष्टशतं वा आहुतीराज्येन जुहुयात्। यावज्जीवमनन्यमना जपेत्। ततोऽनेन कर्त्तव्यं कर्मोच्यते। एवं सिद्धस्य वक्ष्यमाणममावास्यायां स्वाग्नौ कपिलाज्येनाष्टसहस्रमाहुतीर्जुहुयात्। हुत्वा केशानालिप्याष्टशतं जुहुयात्। अथर्व-

शिरः मत्युक्तविधानेन आराधनम् । ततः कृत्या रक्ताङ्गी रक्तमूर्धजा रक्तनयनोपद्यते । पूर्वमेवाजारुधिरपूरितांश्चतुरः कुम्भान्स्थापयित्वा तैस्तां तर्पयेत् । अन्यथात्मानं नाशयेत् । तया सर्वान्नाशयेत् तया सर्वं चाभिमतं साधयेत् । अनेनाज्येनायुतं जुहुयात् । कालज्ञानमुत्पद्यते । आयुषः प्रमाणं सर्वमेवोत्पद्यते । कापिलेन पयसा जुहुयादयुतम् । जातिस्मरो जायते । उवाच च फलम् । " श्रुतं रुद्रप्रसादेन सर्वमेव यथातथम् । एकादशैकादशतो दानमुक्तं तथानघ ॥ पञ्चगोकर्णिकं दानं शम्भुदानं तथैव च । सार्वभौमकरं भूमेः कलशस्थापनं तथा ॥ शिखास्फुटितसंस्कारखण्डनिर्माणदानकम् । रुद्रैकादशपूजा च सोमवासुकिसंश्रुता ॥ जातिस्मरक्रिया पुण्या कुलदानं तथैव च । राज्ञामन्यच्च यत्कल्प्यं सर्वमुक्तमशेषतः॥ भूयोऽपि रुद्रमन्त्रेण वदस्व भवनाशनम् । अपमृत्युजयं कर्म राज्ञामेव विशेषतः ॥ समन्त्रकं सोपदेशं कालदेशं तथैव च । सर्वमेतदनेनैव साध्यमुक्तं हि शम्भुना" ॥

॥ तामिममेकादशानुवाकात्मकं रुद्राध्यायं विनियुङ्क्ते ॥

रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनं ऽशमयति नार्तिमार्छत्यध्वर्युर्न यजमानः इति ॥ १ ॥

रुद्रः वै एषः यत् अग्निः सः एतर्हि जातः यर्हि सर्वः चितः सः यथा वत्सः जातः स्तनम् प्रेप्सतीति प्रऽईप्सति एवम् वै एषः एतर्हि भागधेयमिति भागऽधेयम् प्रेप्सतीति प्रऽईप्सति तस्मै यत् आहुतिमित्याऽहुतिम् न जुहुयात् अध्वर्युम् च यजमानम् च ध्यायेत् शतरुद्रीयमिति शतऽरुद्रीयम् जुहोति भागधेयेनेतिभागऽधेयेन एव एनम् शमयति न आर्तिम् एति ऋच्छति अध्वर्युः न यजमानः ॥ १ ॥

सा० भा० यस्मिन्काले चीयमानोऽग्निः अशेषचितिनिष्पादनेन सर्वश्चितो भवति एतस्मिन्काले अयमग्निरुत्पन्नो भवति । सोऽयमुत्पन्नोऽग्निरेव रुद्र इत्युच्यते । देवैः स्वकीयवामवस्वदाने सति रोदनाद्वा प्राणिनां रोदनहेतुदुःखस्य द्रावणाद्वा अग्निरेव रुद्रः । यथा लोके जातो वत्सस्तदानीमेव स्तनं प्राप्तुमिच्छति । एवमेवैष एतस्मिंश्चितिसंपूर्तिकाले समुत्पन्नो रुद्रनामकोऽग्निः स्वकीयं भागमिच्छति । तस्मा अग्नये कस्याश्चिदाहुतेरहोमे अध्वर्युं यजमानं च भक्षयितुं ध्यायेदग्निः । अतस्तत्परिहाराय शतरुद्रीयं जुहुयात् । शतमित्यपरिमितत्वं लक्ष्यते । अपरिमिता रुद्रा यस्मिन्नध्याये प्रतिपाद्यन्ते सोऽध्यायः शतरुद्रीयः तेन होमे सति स्वकीयभागेन रुद्रस्य तुष्टत्वादध्वर्युयजमानौ न म्रियेते ॥ १ ॥

॥ अथ होमद्रव्यं विधत्ते ॥

यद्ग्राम्याणां पशूनां पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचार्पयेद्यदारण्यानामारण्यान्जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्यानिति ॥ २ ॥

यत् ग्राम्याणाम् पशूनाम् पयसा जुहुयात् ग्राम्यान् पशून् शुचा अर्पयेत् यत् आरण्यानाम् आरण्यान् जर्तिलयवाग्वेति जर्तिलऽयवाग्वा वा गवीधुकयवाग्वेति गवीधुकऽयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति न आरण्यान् ॥ २ ॥

सा० भा० शुचार्पयेत् संपातनरोगेण[1] योजयेत् । जर्तिलः आरण्यतिलः । गवीधुकाः आरण्यगोधूमाः ॥ २ ॥

॥ पक्षान्तरं विधत्ते ॥

अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशून्हिनस्ति नारण्यानिति ॥ ३ ॥

१ संपातेन ।

अथो इति खलु आहुः अनाहुतिरित्यनाऽहुतिः वै जर्तिलाः च गवीधुकाः च इति अजक्षीरेणेत्यजऽक्षीरेण जुहोति आग्नेयी वै एषा यत् अजा आहुत्येत्याऽहुत्या एव जुहोति न ग्राम्यान् पशून् हिनस्ति न आरण्यान् ॥ ३ ॥

सा० भा० अदनीयं यद्द्रव्यं तदेवाहुतियोग्यम्। "यदन्नः पुरुषो भवति तदन्नास्तस्य देवता" इति न्यायात्। जर्तिला गवीधुकाश्च मनुष्यैर्नाद्यन्ते तस्मादाहुतियोग्या न भवन्तीत्याहुः पूर्वपक्षोपन्यासादूर्ध्वमाहुः। तस्मादुभयं परित्यज्याजाक्षीरेण जुहुयात्। अजाग्न्योरुभयोः प्रजापतिमुखजन्यत्वेन साजात्यादियमजाग्नेयी अत आहुतियोग्यैव। अतस्तत्क्षीरद्रव्येण जुहोति ग्राम्यारण्यपयसोरस्वीकारात्तेऽपि पशवो न हिंस्यन्ते ॥ ३ ॥

॥ होमसाधनभूतां जुहूमपवादितुं साधनान्तरं विधत्ते ॥

अङ्गिरसः सुवर्गं लोकं यन्तोऽजायां घर्मं प्रासिञ्चन् सा शोचन्ती पर्णम् पराजिहीत सोऽर्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति स योनित्वायेति ॥ ४ ॥

अङ्गिरसः सुवर्गमिति सुवःऽगम् लोकम् यन्तः अजायाम् घर्मम् प्रेति असिञ्चन् सा शोचन्ती पर्णम् परेति अजिहीत सः अर्कः अभवत् तत् अर्कस्य अर्कत्वमित्यर्कऽत्वम् अर्कपर्णेनेत्यर्कऽपर्णेन जुहोति सयोनित्वायेति सयोनिऽत्वाय ॥ ४ ॥

सा० भा० प्रवर्ग्यकाले महावीरे संतप्तं घृतं क्षीरसहितं घर्मः। तं घर्मं प्रयाणव्यग्रा अङ्गिरसः प्रमादादजायां प्रकर्षेणासिञ्चन्। सा शोचन्ती साप्यजा तेनोष्णघृतेन तप्यमाना पर्णसदृशं स्वकीयं रोमसंघं भूमावपातयत्। स च रोमसंघातोऽर्कः प्रसिद्धार्करूपेण प्ररूढः। अर्चनीयेन पूज्येन प्रवर्ग्यघृतेन तथाविधेनाजारोमसंघातेन चोत्पन्नत्वादस्य स्थावरस्यार्कनाम संपन्नम्। तेनार्कपर्णेन होमे सति पर्णक्षीरयोरुभयोरप्यनन्यकार्यत्वात्समानयोनित्वं संपाद्यते ॥ ४ ॥

॥ होमकाले किञ्चिद्विशेषं विधत्ते ॥

उदङ् तिष्ठञ्जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते इति ॥ ५ ॥

उदङ् तिष्ठन् जुहोति एषा वै रुद्रस्य दिक् स्वायाम् एव दिशि रुद्रम् निरवदयत इति निःऽअवदयते चरमायाम् इष्टकायाम् जुहोति अन्ततः एव रुद्रम् निरवदयत इति निःऽअवदयते ॥ ५ ॥

सा० भा० अन्त्यप्रदेशवर्त्तिनी चरमेष्टका सा च सूत्रकारेण दर्शिता ।"उत्तरस्य पक्षस उत्तरापरस्यां स्रक्त्याम् विकर्ण्यां स्वयमातृण्णायाम्" इति । अन्त्यदेशगतेन होमेन क्रूरमिमं रुद्रमन्तत एव निःसारयति ॥ ५ ॥

॥ रुद्राध्याये होमसाधनमन्त्रविभागं विधत्ते ॥

त्रेधाविभक्तं जुहोति त्रयं इमे लोका इमानेव लोकान् समावद्वीर्यान्करोति इति ॥ ६ ॥

त्रेधाविभक्तमिति त्रेधाऽविभक्तम् जुहोति त्रयः इमे लोकाः इमान् एव लोकान् समावद्वीर्यानिति समावत्ऽवीर्यान् करोति ॥ ६ ॥

सा० भा० तत्र त्रेधा विभाग एवं करणीयः । नमस्ते रुद्रेत्यारभ्य सभापतिभ्यश्च वो नम इत्यन्तः प्रथमो भागः । नमो अश्वेभ्य इत्यारभ्य अवार्याय चेत्यन्तो द्वितीयो भागः । नमः प्रतरणाय चेत्यारभ्य य एतावन्तश्चेत्यृचा सहितस्तृतीयो भागः ॥ ६ ॥

तिसृष्वप्याहुतिषु क्रमेण जानुदघ्नादिदेशेषु स्रुग्धारणं हस्ताभिनयेन विधत्ते ॥

इयत्यग्रे जुहोत्यथेयत्यथेयति त्रय इमे लोका एभ्य एवै-नं लोकेभ्यः शमयति इति ॥ ७ ॥

इयति अग्रे जुहोति अथ इयति अथ इयति त्रयः इमे लोकाः एभ्यः एव एनम् लोकेभ्यः शमयति ॥ ७ ॥

नमो रुद्रेभ्यो ये पृथिव्यामित्यादियजुस्त्रयसाध्यं होमं विधत्ते ॥

तिस्र उत्तरा आहुतीर्जुहोति षट् संपद्यन्ते षड्वा ऋतव ऋतुभिरेवैन शमयति इति ॥ ८ ॥

तिस्रः उत्तरा इत्युत्ऽतराः आहुतीरित्याऽहुतीः जुहोति षट् समिति पद्यन्ते षट् वै ऋतवः ऋतुभिरित्यृतुऽभिः एव एनम् शमयति ॥ ८ ॥

पूर्वोत्तरपक्षभङ्ग्या अनुपरिक्रम्य होमं विधत्ते ॥

यदनुपरिक्रामं जुहुयादन्तरवचारिण रुद्रं कुर्यादथो खल्वा-हुः कस्यां वाह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्य-मपरिवर्गमेवैन शमयति इति ॥ ९ ॥

यत् अनुपरिक्राममित्यनुपरिऽक्रामम् जुहुयात् अन्तरवचा-रिणमित्यन्तःऽअवचारिणम् रुद्रम् कुर्यात् अथो इति खलु आहुः कस्याम् वा अह दिशि रुद्रः कस्याम् वा इति अनुप-रिक्राममित्यनुपरिऽक्रामम् एव होतव्यम् अपरिवर्गमित्यपरि-ऽवर्गम् एव एनम् शमयति ॥ ९ ॥

सा० भा० अनुपरिक्रामं अनुक्रमेण परितो भ्रमणं कृत्वा यदि जुहुया-त्तदानीं तं रुद्रमन्तरवचारिणमग्निक्षेत्रस्य मध्ये प्रविश्य चरन्तं कुर्यात् । स

१ परिभ्रमेण ।

च प्रविष्टः । क्रूरत्वादुपद्रवं करोत्येव तस्मात्परिभ्रमणं न कर्त्तव्यमिति पूर्वः पक्षः । अथोशब्दः सिद्धान्तोपक्रमार्थः । अभिज्ञास्त्वेवमाहुः । खलु आहुः शब्द उपन्यस्तपक्षनिराकरणद्योतनार्थः । यदुक्तं पूर्वपक्षिणा तन्न भवतीत्यर्थः । अयं रुद्रः सर्वत्र संचरन्कदा कस्यां दिशि वर्तते कस्यां वा न वर्तत इति को ज्ञातुं समर्थः अतो रुद्रमन्वेष्टुमनुक्रमेण परिभ्रमणं कृत्वैव होतव्यम् । तथा सति परितो यत्र क्वापि स्थितं रुद्रमवर्जयित्वैव शान्तं करोति । शान्तत्वादेवान्तः प्रविश्यायं रुद्रः संनन्तः संचरन्नोपद्रवं करोतीत्यर्थः ॥ ९ ॥

॥ नमो रुद्रेभ्यइत्यादिमन्त्राणां यजमानवाचनं विधत्ते ॥

एता वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनं सुवर्गं लोकं गमयति इति ॥१०॥

एताः वै देवताः सुवर्ग्या इति सुवःऽग्याः याः उत्तमा इत्युत्ऽतमाः ताः यजमानम् वाचयति ताभिः एव एनम् सुवर्गमिति सुवःऽगम् लोकम् गमयति ॥ १० ॥

सा० भा० एतैर्यजुर्भिः प्रतिपाद्या या देवताः सन्ति ताः स्वर्गहेतवः अतएवोत्तमाः उत्कृष्टाः चरममन्त्रप्रतिपाद्यत्वाद्वोत्तमत्वं ता अध्वर्युर्यजमानं वाचयेत् । तत्प्रतिपादकानि यजूंषि पाठयेदित्यर्थः । तथा सति ताभिरेवदेवताभिरेनं यजमानं स्वर्गं प्रापयति ॥ १० ॥

॥ अर्कपर्णस्य परित्यागदेशं विधत्ते ॥

यन्द्विष्यात्तस्य सञ्चरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति स आर्त्तिमार्छतीति ॥ ११ ॥

यम् द्विष्यात् तस्य सञ्चर इति सम्ऽचरे पशूनाम् नीति अस्येत् यः प्रथमः पशुः अभितिष्ठतीत्यभिऽतिष्ठति सः आर्तिम् एति ऋच्छति ॥ ११ ॥

---

१ सन्नतः ।

सा० भा० यं पुरुषं यजमानो द्विष्यात्तस्य पशूनां संचरप्रदेशे तदर्कपर्णं परित्यजेत् । तस्त्यक्तं पर्णं यः पशुः प्रथम इतरेभ्यः पशुभ्यः पूर्वः सन्नभिक्रम्य तिष्ठति स म्रियेत ॥ ११ ॥

॥ अत्र विनियोगसंग्रहः ॥

प्रश्ने तु पञ्चमे प्रोक्तः शतरुद्रीयहोमकः । सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्तितः । अवार्यायेत्यन्त एकस्तन्मसीत्यन्त उत्तरः । नमो रुद्रेभ्य इत्येषु पृथिव्यादिविभेदतः । त्रेधा भिन्नस्ततो होमे षण्मन्त्रा इह कीर्तिताः ॥

॥ अथ मीमांसा ॥

दशमाध्यायस्याष्टमपादे चिन्तितम् । "जर्तिलोक्तेश्चतुर्धा किं विकल्पोऽथ पयःश्रुतिः । विकल्पः पूर्ववन्मैवं वाक्यैक्यात्पयसा सह" ॥

॥ अग्नौ श्रूयते ॥

जर्तिलयवाग्वां वा जुहुयाद्गवीधुकयवाग्वां वा न ग्राम्यान्पशून्हिनास्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति इति ॥

सा०भा० जर्तिला आरण्यतिलाः । गवीधुका आरण्यगोधूमाः । तयोरुभयोर्विकल्पः श्रौत एव । अनाहुतिरिति पूर्वयोः पक्षयोर्दूषितत्वात् होमाभावस्तृतीयः पक्षः । न चात्र जर्तिलगवीधुकयोरनाहुतित्ववचनेन पर्युदासः संभवति आहुतिपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् । पयोविधिश्चतुर्थः पक्षः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावेन षोडशिग्रहणाग्रहणवद्विकल्पे प्राप्ते ब्रूमः । पयोविधिना सह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् । ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोमं प्रत्याहुतित्वं नास्ति। पयसस्तु तदस्ति । इत्थं महाभागं पय इति । तस्मादर्थवादः । वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके श्रीरुद्रभाष्ये एकादशोऽनुवाकः समाप्तः ॥

॥ इति श्रीरुद्राध्यायनमकभाष्यं समाप्तम् ॥

वृषाधिरूढं देवेशं सर्वलोकैककारणम्। ध्यायेद्ब्रह्मादिभिस्तुत्यं पार्वतीसहितं शिवम् ॥ अस्य रुद्रसमुदायस्य केवलं जपमात्रेण सर्वसिद्धिः। त्रिषवणस्नायी जपित्वा पञ्चमहापातकात् पूतो भवति। अथ सर्वकामार्थः शौनकोक्तः प्रयोगः। "अथापरं पूर्वोक्तविधिना मन्त्रन्यासादिकं कृत्वा प्रस्थमात्रपरिमाणपरिमितान् कलशानक्षतगन्धपुष्पसहितोदकयुक्तान् कृत्वा पूर्वोक्तविधिना देवमभ्यर्च्य देवपार्श्वे रुद्रप्रथमानुवाकमन्त्रैराज्याहुतीर्हुत्वा रुद्रैकादशिनीं जपेत्। जपान्ते 'अग्नाविष्णू–' इत्येकादशानामनुवाकानामेकैकं जपेत्। ततः पञ्चामृतैः स्नापयेत्। ततः पञ्चगव्येन। ततो 'नमस्त'– इति प्रथमयोपचाराः। ततो यथाशक्ति ब्राह्मणान् रुद्रवेदिनो भोजयेत् सर्वे कामाः संपद्यन्ते। अथवा रुद्रमहारुद्रातिरुद्रेष्वन्यतमं जप्त्वोक्तसंख्यया पायसं जुहुयात्। सर्वकामानवाप्नोति। अथवैवमेव यथासामर्थ्यं क्षीरेण घृतेन च स्नापयेत्। रुद्राध्यायेनाभिमन्त्र्य।'मानस्तोके–' इत्यनेनघृतपायसेनायुतं जुहुयात्। अथ देशेऽन्तर्धाय कपटग्रहादिषु मध्य एष एव विधिरुच्चाटने। फट्कारेण सर्वकार्याणि समारभेत्। अथ राज्यकामस्य पद्मसौगन्धिकोत्पलानां 'प्रमुञ्च धन्वन–' इति मन्त्रेण भगवतो महेश्वरस्योभयचन्दनाक्तानां शतसहस्रं महेश्वरस्य शिरस्यारोपयेत्। राजा श्रियं विन्दति। 'नमो वः किरिकेभ्य–' इत्यनेन तिलतण्डुलानामाज्याक्तानां शतसहस्रं जुहुयात्। राज्यं प्राप्नोति"। अथान्यो बौधायनोक्तः। "रुद्रमहारुद्रातिरुद्राणामन्यतमं जप्त्वोक्तसंख्यया राष्ट्रकामो यवानाज्याक्तानयुतं जुहुयात्। अथ श्रीकामस्य। रुद्रमहारुद्रातिरुद्राणामन्यतमं जप्त्वा पायसेनायुतं जुहुयात्। श्रियं लभते। वित्तकामस्य।'इमा ᳪ रुद्राय–'इत्यनेन तिलैः शतसहस्रं जुहुयात्"। अथ कालिकापुराणे सनत्कुमारः। "आदावङ्गानि संयोज्य स्नात्वा देहे स्वके द्विजः। ततो वत्स महादेवं पूजयेद्विधिपूर्वकम् ॥ एकं लिङ्गं नदीतीरे ह्यपरास्यं जलैः स्नपेत्। पञ्चगव्येन भूयोऽपि शम्भुं पलशतेन च ॥ संस्नाप्य वारिणा भूयो ध्यात्वा तं जगदीश्वरम् (एकं लिङ्गं वृषभादिपरिवाररहितम्। अपरास्यं पश्चिमाभिमुखम्) तद्गोरोचनया सार्धं लेपयेद्भक्तितो हरम्॥ श्रीवृक्षोत्थैस्ततः पत्रैर्निश्छिद्रैर्जन्तुवर्जितैः। नैव पर्युषितैः स्निग्धैः प्रोक्षितैरर्चयेच्छिवम् ॥ एकादश दिनान्येवमर्चयेत्तं महेश्वरम्। विधिनानेन देवेशं भूयस्तं वै निबोध मे ॥ दिनान्येकादशैवादौ पूजान्ते होममाचरेत्। साज्यैर्बिल्वदलैर्नित्यं दक्षिणां दिशमास्थितः ॥ एवं नीलोत्पलैर्भूयः पद्मैश्चैव सुगन्धिभिः। होममर्चां प्रकुर्वीत त्रिरेकादशवासरान् ॥ सघृतं गुग्गुलुं दग्ध्वा नित्यमेव हरप्रियम्। पूजान्ते परया भक्त्या तस्यैवं धनसंचयः ॥ वित्तकामो यदा सोऽथ स्यादालिङ्ग्य वनस्प-

तीन् । जपेद्रुद्रांशिछवं ध्यायेत्भुवं ते हेमतां ययुः ॥ सपुष्पं वा तरुं ब्राह्मं बिल्वं वालिङ्ग्य तान् जपेत् । आवर्तयन्बहून्वारान् स वृक्षो हेमतां व्रजेत् ॥ तीर्थे कनखले गत्वा जप्त्वा रुद्रान्बहून्पुनः । जपेन्मध्यजले कृष्णपाषाणा हेमतामियुः ॥ महापर्वतमाश्रित्य अवष्टभ्य दिनेदिने । जपेदेकादशाहान्ते निधिं प्राप्नोति पुष्कलम् ॥ समिधो वैतसीश्चैतत् त्रिमध्वक्ता जुहोति यः । तदन्ते जायते तस्य द्रविणं पुष्कलं बहु । मधुबिल्वादयो वृक्षा आलिङ्ग्यैकादशे दिने । जपान्ते हेमतां यान्ति तथ्यं तत्र न संशयः ॥ अथवा लिङ्गमाश्रित्य स्वयम्भुमपराङ्मुखम् । संछाद्यैकादशाहानि जपेदेतत्समुपङ्कजैः ॥ पशून्वा कुत्सितांश्चैव न पश्येन्न च संस्पृशेत् । यं पश्येद्यपपाते तु हेम स्यात् द्वादशेऽहनि" ॥ अथान्यः । "कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी । स्थण्डिलं चोपलिप्यार्कप्रस्तरे वा जपेत्सुधीः । 'नमो अस्तु नीलग्रीवाय–'इत्यनेन सहस्राभिमन्त्रितं घृतपायसमीश्वराय निवेदयेत् । कार्षापणानां सहस्रमुत्पद्यते । अथान्यः । 'प्रमुञ्च धन्वन-'इत्यनेन यथासिद्धान्नं महानसेऽन्नावष्टसहस्रं जुहुयात् । द्रव्यमव्यवच्छिन्नमक्षयं भवति । अथान्यः । 'नमो वः किरिकेभ्य–' इति तिलाहुतीनामयुतं जुहुयात् । कार्षापणानां सहस्रमुत्पद्यते" । इति कालिका पुराणे । अथान्नकामस्य शौनकः । 'असौ यस्ताम्र-'इत्यनेनोभयेनाहरहरुदयास्तमययोरादित्यमुपतिष्ठेताक्षयमन्नमुपतिष्ठते । अथ बौधायनः । "उदुम्बरसमिद्भिर्मध्वक्तैवा रुद्रमहारुद्रातिरुद्राणामन्यतमं जप्त्वा तंत्रोक्तसंख्यया जुहुयादन्नमुत्पद्यते" । अथ वृष्टिकामस्य शौनकः । 'असौ यस्ताम्र–' इत्यनेनोदकशाकयवाहारो वेतससमिधामयुतं जुहुयात् गुडक्षीराक्तानां वायुतं जुहुयात् । भगवानादित्यो वृष्टिं मुञ्चति । अथायुष्कामस्य स एवाह । "आयुष्कामः पूर्वोक्तविधिना देवमाराध्य सर्वदिक्षु रक्तपीतकृष्णबलीन्दत्वा रुद्रैकादशिनीमेकादशकृत्वो जप्त्वा 'आरात्ते गोघ्न–'इतिषोडशोपचारान्कृत्वा तमेव मन्त्रं सहस्रं जपेत् । व्याधितश्चेद्रवौर्दिने ब्राह्मणाय दक्षिणां दत्वा सहस्रं जापयेत् । व्याधिभ्यः प्रमुच्यते शतायुर्भवति । अथ पुत्रकामस्य शौनकः । 'परिणो रुद्रस्य–'इतिवटसमिधामयुतं जुहुयात्पुत्र आयुष्मानुत्पद्यते । अथ गोकामस्य स एव । 'नमो वः किरिकेभ्य–' इति मन्त्रेण वैकङ्कतोदुम्बरसमिधां दध्यक्तानामयुतं जुहुयात् । अनन्तगोस्वामी भवति न च गावः प्रक्षीयन्ते । अथवानेनैव मन्त्रेणार्कपर्णशतं गोपयसैकादशाहुतीर्जुहुयादेकादश गाव उत्पद्यन्ते । अथ वाक्कामस्य स एवाह । महाचतुष्पथे वल्मीकमृदा लिङ्गं प्रतिष्ठाप्य पञ्चगव्येन स्नापयेत् । 'नमो वः किरिकेभ्य–' इत्यनया चा-

---

१ ययुः इति पाठान्तरम् । २ अत्र 'स्वयम्भ्वपरादिङ्मुखम्' इति शुद्धः पाठः कल्पनीयः ।

भिमन्त्र्य 'मानस्तोक–' इति घृतपायसं दिनत्रयं बिल्वमुपहरेत् । दक्षिणामूर्तौ वचाफलसमर्घफलं सुसूक्ष्मं चूर्णं कृत्वा ताम्रभाजने न्यसेत् । कपिलाघृतेनालोड्य प्रदेशिन्या नियुताभिमन्त्रितं कृत्वा पिबेदमतिहतवाक्यो भवति" । पुनः स एव । 'द्रापे अन्धसस्पत–' इत्यादिना शतसहस्रं जुहुयात् । वासांस्यक्षराणि भवन्ति" । अथ वश्यकामस्य बौधायनः । "रुद्रैकादशिनीरुद्रमहारुद्रातिरुद्रेष्वन्यतमं जप्त्वा । जुहुयात् श्वेतपुष्पाणि स विश्वं कुरुते वशम् । अथ कृत्स्नं जगत्कश्चिद्वशीकर्तुं समीहते । नाभिमात्रजलस्थश्च जपेद्रुद्रान्बहूंस्तथा ॥ कृत्वा चैवार्चनं शम्भोरादाय नियमं ततः । आदित्याभिमुखो भूत्वा रुद्रानावर्त्तयेत्सदा ॥ तस्यावर्तयतो रुद्रान् जिताक्षस्य च धीमतः । वृषकेतुः समायाति वरदो भक्तवत्सलः ॥ अथारोग्यकामस्य शौनकः । 'मानोमहान्तं–' इति मन्त्रेण तिलाहुतीनामयुतं जुहुयात् । बालानां परिजनस्यारोग्यं भवति" । अथ मृत्युपस्थिते सर्वभये क्लेशविमोक्षकामः पूर्वोक्तविधिना मन्त्रदेवन्यासादिकं कृत्वा बलींश्च दत्वा 'मीढुष्टम–' इति पुनः षोडशोपचारं कृत्वा रुद्रैकादशिनीमेकादशकृत्वो जप्त्वा जापयित्वा वा रुद्रवेदिनं सर्वेभ्यो भयेभ्यः प्रमुच्यते नात्र संशयः । 'इमा रुद्रा–' इति मन्त्रेण दधिमधुपायसाहुतीनां प्रत्येकमयुतं जुहुयात्सर्वभयान्युपशाम्यन्ति । अथ शान्तिकामः पूर्वोक्तविधिना मन्त्रदेवन्यासादिकं कृत्वा देवमाराध्य रुद्रवेदिनं ब्राह्मणमाचार्यं कृत्वा स्वयम्भु लिङ्गमभिगम्य तत्राप्यनेनैव विधिनाराधनं कृत्वा पञ्चामृतैः स्नापयित्वा प्रथमानुवाकेनाज्यहोमं कृत्वा देवं संपूज्य 'नमस्ते रुद्रमन्यव–' इत्येकादशानुवाकानां जपं कुर्यात् । धारामास्रावयंस्तथा जपान्ते 'अग्नाविष्णू सजोषस–' इत्येकादशानुवाकानामेकमेकं जपेत् । पुनः पञ्चामृतैः स्नापयेत्ततो देवं समभ्यर्च्य भक्ष्यभोज्ययुतं नैवेद्यं दत्वा चतुरः पूर्णकलशान्पञ्चमृत्तिकापञ्चपल्लवपञ्चरत्नयुतानक्षतगन्धधूपादिभिरर्चयित्वा सितवस्त्रवेष्टितान् कृत्वा 'शं नो वातः पवताम्' इति शान्तिं ध्यायन् जप्त्वाभिषेकं कारयेत् शान्तिर्भवति । ततः स्वस्थो भवति । आचार्याय सितवस्त्रयुगुलं धेनुं काञ्चनं च दद्यात् ब्राह्मणांश्च भोजयेच्छान्तिर्भवति" । पुनः शौनकः । 'मानोमहान्तम्-' इति मन्त्रेणाश्वत्थसमिधामयुतं जुहुयात् । प्रतिसंवत्सरं यात्रायामयुतं जुहुयात् । एवं कृते आत्मीयस्य बालस्त्रीवृद्धजातस्य शान्तिः । 'नमो भवाय-' 'नमो ज्येष्ठाय–'' इत्येताभ्यां कुमारग्रहादिग्रस्तानां भस्माभिमन्त्र्य रक्षां कारयेत् । रात्रौ शिखां च बध्नीयात् कुमारादिग्रहभयं न भवति । 'मीढुष्टमशिवतम–' इति महाभये चौरभयेऽग्निभये प्राणात्यये वा मनसा जपेत् क्षेमेणागच्छति ।

---

१ समर्थं इति पाठान्तरम् ।

'इमा ँ रुद्राय-' इत्यनेन सुवर्णदूर्वाङ्कुरैः शतसहस्रं जुहुयात् । महाज्वरोपघाते गतायुरपि दीर्घायुर्भवति। 'नमस्ते रुद्रमन्यव-' इति चतुर्भिः प्रत्यृचं यवगोधूम-गवीधुकजार्तिलानां दधिमधुघृताक्तानामयुतं जुहुयात् । एकादशद्वादशरात्रेण वा वायुमुपशमयति। 'अध्यवोचदधिवक्ता-' इति सर्वरक्षा कर्त्तव्या । आतुरेभ्यः सर्षपान्सप्ताभिमन्त्रितान् कृत्वा चतुर्दिशं प्रक्षिपेद्दशदिक्षु रक्षा कृता भवति। पथि गच्छतोऽसच्छान्तिमुपगच्छति । सर्षपेण ब्रह्मराक्षसभूतपिशाचादिभ्यो मोक्षयति। 'या ते रुद्र शिवा तनू-' इति ऋग्यान्तिमा तया प्रतिसरं सहस्राभि-मन्त्रितं कृत्वा एकादश ग्रन्थीन् दत्वा बालानां गुर्विणीनां च हस्ते बध्नीयात् । बाला गुर्विण्यश्च सुखेन वर्द्धन्ते । यक्षराक्षसाद्युत्सादनं च। 'सहस्राणि-' इति रक्तवाससा रक्तोष्णीषरक्तमाल्यानुलेपनैर्देवं समर्चयेत् । श्मशाने एकवृक्षे नदीपुलिने चतुष्पथे वने वा कार्पासतण्डुलपरिवेष्टितां महातैलाक्तां श्मशानाग्नौ प्रदीप्तेन यवपिष्टेनैकादशाभिमन्त्रितेन यक्षराक्षसादेः शत्रोरपि प्रतिकृतिं कृत्वोरसि कटुतैलेन प्रतिमां कृत्वा स्थाप्य दक्षिणभूमिभागे एकैकेन शरेणैकादशप्राणायतनेषु वितोदयेत्। सहसागतं सकललोकगतं वा श-त्रुमुत्सादयति। 'नमो रुद्रेभ्य-'इति मध्याह्ने रुक्मकण्टकैर्जुहुयात्सर्षपैश्चाहरहर्वा प्रत्यापत्तीराष्ट्रे देवयोनयः सपिशाचाश्च भ्रंशन्ति खेचरीणां स्त्रीणां यातुधानानां वा भस्मीभवन्ति। अथेमाः शान्तयः। 'इमा ँ रुद्राय-' इति मन्त्रेण गवामुपघाते गोष्ठमध्येऽग्निमुपसमाधाय वैकङ्कतसमिधामयुतं जुहुयात्। गवां शान्तिर्भवति। यावन्तश्चतुष्पदास्तावद्भ्य एवमेव शान्तिविधिं कुर्यात्। "नमस्ते रुद्र मन्यव-" इत्यनेन गवामुपघाते गोष्ठमध्येऽग्निमुपसमाधाय वैकङ्कतसमिधामयुतं जुहुयात्। पश्वादीनां शान्तिर्द्विगुणेन महाशान्तिरिति। अथ शत्रुमारणकामः पूर्वोक्तविधिना मन्त्रन्यासादि कृत्वा दिक्पालेभ्यो रक्तौदनबलीन् दत्वा 'स्तुहिश्रुतम्-' इत्यनेन षोडशोपचारान् कृत्वा रुद्रैकादशिनीमेकादशकृत्वो जपित्वा पुनः 'स्तुहिश्रुतम्-' इति सहस्रं जपेत्प्रत्यहं सप्तरात्रेण शत्रुविनाशो भवति। अथ कृत्यामुत्पादयितुकामः रक्तवाससा रक्तोष्णीषरक्तमाल्यानुलेपनैर्देवमर्चयेत्। श्मशानाङ्गणे लोहितशला-काः प्रादेशमात्रा महातैलाक्ता लक्षं जुहुयात्। "उत्तिष्ठ रक्ताङ्गि रक्तनेत्रे रक्तके-शि" कन्यां तां क्षिप्रमेव रुधिरकुम्भेन पूर्णमांसमात्रेण तर्पयेत्। अन्यथा कर्त्ता-रमेव हिंसेत् सा त्वरिता यन्त्रिता वदति। "कं धर्षयामि वद वा ज्ञायते यदि त्रैलोक्यस्थितं अभ्युत्सादयिष्यामि" इति। तथा चैकैकस्य शरीरस्य ग्रामे नगरे गृहे च प्रयोगः। शाकं यशस्यमुपपयोक्ष्यमुपोष्य द्वादश रात्राणि लघुभ्यो

१ वारमिति पाठान्तरम्

लघूनि महान्तीति *अमहीनानि तुलापुरुषचान्द्रायणानां मध्यम एव विकल्प्य ग्रहणे त्वाचम्य नित्याभिवाद्यावलम्बिनान्यथा पठेत् इति। 'प्रमुञ्च धन्वन–' इति षड्भिरायुधमभिमन्त्र्य संग्रामोपनीताः शत्रवः पलायन्ते। अभिमुखा नावतिष्ठन्ते। दर्भकण्टकानामयुतं जुहुयात्। प्रभूतः शत्रूयते क्षत्रियादिः। क्षत्रियो दिवसत्रिभागेन वैश्यः षड्भागेन चतुर्भागेन शूद्रः। तथा चाव्याहतं कर्मेत्याचक्षते। 'विकिरिद्र विलोहित–' इति यथा शत्रुभिरनेकपर्यायस्सुप्तशत्रुमुखे जुहुयात्। सर्वे विभग्नमनसो विमुखाः शत्रवश्च पलायन्ते। 'नमो हिरण्यबाहव–' इत्यनुवाकैः कटुतैलाक्तानां राजाभिशङ्कितानां सर्षपान् जुहुयात्। चक्रमुत्सादयति। फट्कारेण देवस्योपरि मालामधोशिरामवलम्ब्य सशिरसा वस्त्रेण रुधिरमाप्लाव्य त्रिकटुकेनाभ्यज्य देवकराङ्गुलिना रेखामुत्पाद्य शत्रोर्नामानुस्मरन् जपेत्। सबलसमुदायं शत्रुमुच्चाटयति। एवं कृत्स्नं ग्राममुच्चाटयति एकाह्ना। राजानमहोरात्रेण संपूर्णमर्धदिवसेन क्षत्रियं क्षपयति। दिवसत्रिभागेन वैश्यं चतुर्भागेन शूद्रम्। तथा चाव्याहतं कर्मेत्याचक्षते। एतत्सर्वं शौनकोक्तं हेमाद्रौ। अथ मेरुतन्त्रोक्तम्। रौद्रीं धारां ततः कुर्यात्प्रोच्यते तद्विधानकम्। 'नमस्ते' रुद्राग्नाविष्णू इत्यध्यायद्वयेन च। आवर्तनमिति प्रोक्तं गङ्गास्नानफलप्रदम्। आवर्तनाभिषेकं तु यः कुर्यात्प्रत्यहं नरः। तस्यैव दिनजं पापं दैवजं नाशमाप्नुयात्। संध्यावन्दनतः क्षीणं तच्चेत्प्राग्जन्मजं भवेत्। एकः पाठो नमस्तेऽस्य ह्यनुवाकः परस्य च। एवं भवाय'नमस्ते'ऽस्य 'अग्नाविष्णू' तथैककम्। इयं रुद्री समाख्याता रौद्रपापनिकृन्तनी। अनया प्रत्यहं यस्तु कुर्याल्लिङ्गाभिषेचनम्। जन्मजन्मकृतं पापं वर्षमध्ये प्रणश्यति। रुद्रीभिरेकादशभिर्लघुरुद्रः प्रकीर्तितः। अनेन सिक्तं यैर्लिङ्गं ते न पश्यन्ति भास्करिम्। एकादशभिरेतैस्तु महारुद्रः प्रकीर्तितः। निर्धनो धनमाप्नोति महापातकनाशनः। अनेन विहितो होमः सोमयागफलप्रदः। अनाधिकारी दीक्षायां करे पक्षस्त्वयं मतः। एकादशमहारुद्रैरतिरुद्रः प्रकीर्तितः। अतिपापहरो यस्मात् दृष्टान्या नैव निष्कृतिः"॥

इति मेरुतन्त्रोक्तं विधानं समाप्तमिति शिवम्। इति श्रीभट्टभास्करविरचिते यजुर्वेदभाष्ये अग्निकाण्डे श्रीरुद्रप्रश्नसंज्ञितः पञ्चमः प्रपाठकः समाप्तः। शुभं भवतु। श्रीसाम्बसदाशिवार्पणमस्तु॥ श्रीरस्तु॥ ॥ ॥ ॥ ॥ ॥ ॥

---

* अमहीनानि इति पाठान्तरम्।

॥ अथ चमकभाष्यप्रारम्भः ॥

श्रीगणेशाय नमः । यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् । परिषेचनमुख्यास्तु संस्काराः षष्ठ ईरिताः । वसोर्धारादयः शिष्टाः प्रोच्यन्तेऽस्मिंस्तु सप्तमे । कल्पः । 'अग्नाविष्णू सजोषसे-' इति चतुर्गृहीतं हुत्वौदुम्बरीं स्रुचं व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा 'वाजश्च मे प्रसवश्च-' मे इति सन्ततां वसोर्धारां जुहोत्यामन्त्रसमापनादिति । अत्र ह्येकादशभिरनुवाकैर्मन्त्रः समाप्यते ॥

॥ चतुर्गृहीतहोममन्त्रपाठस्तु ॥

ॐ अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः ।
द्युम्नैर्वाजेभिरागतम् इति ॥ १ ॥

ओम् अग्नाविष्णू इत्यग्नाऽविष्णू सजोषसेति सऽजोषसा इमाः वर्द्धन्तु वाम् गिरः । द्युम्नैः वाजेभिः एति गतम् ॥ १ ॥

सा० भा० हे अग्नाविष्णू युवां सजोषसा समानप्रीती भवतम् । वां युवयोरिमा गिरः स्तुतिरूपा वाचः वर्धन्तु वृद्धिं प्राप्नुवन्तु । युवामपि द्युम्नैः धनैः वाजेभिरन्नैश्च युक्तौ आगतमिहागच्छतम् ॥ १ ॥

अथैकादशानुवाकात्मको मन्त्र उच्यते । अनुवाकभेदस्त्वयज्ञसंयुक्ते कर्मणि पृथङ्मन्त्रत्वेनानुष्ठेयत्वादुपपद्यत इति ॥

तत्र प्रथमानुवाकपाठस्तु ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च

मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे इति ॥ १ ॥

वाजः च मे प्रसव इति प्रऽसवः च मे प्रयतिरिति प्रऽयतिः च मे प्रसितिरिति प्रऽसितिः च मे धीतिः च मे क्रतुः च मे स्वरः च मे श्लोकः च मे श्रावः च मे श्रुतिः च मे ज्योतिः च मे सुवः च मे प्राण इति प्रऽअनः च मे अपान इत्यपऽअनः च मे व्यान इति विऽअनः च मे असुः च मे चित्तम् च मे आधीतमित्याऽधीतम् च मे वाक् च मे मनः च मे चक्षुः च मे श्रोत्रम् च मे दक्षः च मे बलम् च मे ओजः च मे सहः च मे आयुः च मे जरा च मे आत्मा च मे तनूः च मे शर्म च मे वर्म च मे अङ्गानि च मे अस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥ १ ॥

सा॰भा॰ वाजोऽन्नं चशब्दो वक्ष्यमाणद्रव्यापेक्षया समुच्चयार्थः मे मम कल्पतामिति पदं दशमानुवाके वक्ष्यमाणं सर्वत्रानुषज्यते संपद्यतामित्यर्थः । प्रसवोऽन्नस्याभ्यनुज्ञानं दीयतां भुज्यतामित्येवं रूपम् । प्रयतिः शुद्धिः । प्रसितिः बन्धनमन्त्रविषयकमौत्सुक्यम् । धीतिरन्नधारणम् । क्रतुरन्नहेतुर्यज्ञः । स्वरो मन्त्रगत उदात्तादिः । श्लोकः स्तुतिः । श्रावः श्रावयितृत्वसामर्थ्यम् । श्रुतिः श्रवणसामर्थ्यम् । ज्योतिः प्रकाशः । सुवः स्वर्गः । प्राणापानव्यानाः वायुवृत्तिविशेषाः । असुस्तद्वृत्तिमान् वायुः । चित्तं मनोजन्यं ज्ञानम् । आधीतं तेन ज्ञानेन सर्वदा विषयीकृतं द्रव्यम् । वागादयश्चत्वारः प्रसिद्धाः । दक्षो ज्ञानेन्द्रियगतं कौशलम् । बलं कर्मेन्द्रियगतं सामर्थ्यम् । ओजो बलहेतुरष्टमो धातुः । सहो वैरिविषयमभिभवितृत्वम् । आयुः प्रसिद्धम् । जरा आयुषो वलीपलितादिपर्यन्तत्वम् । आत्मा शास्त्रप्रसिद्धः परमात्मा । तनूः शोभनसन्निवेशं वपुः । शर्म सुखम् । वर्म शरीररक्षककव-

चादि । अङ्गानि संपूर्णावयवाः । अस्थानि यथास्थानं स्थितान्यस्थीनि । परूंषि अङ्गुल्यादिपर्वाणि । शरीराणि पूर्वमनुक्ताः शरीरावयवाः ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके चमकभाष्ये प्रथमोऽनुवाकः ॥ १ ॥

## ॥ द्वितीयमाह ॥

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्चमेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे इति ॥ २ ॥

ज्यैष्ठ्यम् च मे आधिपत्यमित्याधिऽपत्यम् च मे मन्युः च मे भामः च मे अमः च मे अम्भः च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धम् च मे वृद्धिः च मे सत्यम् च मे श्रद्धेति श्रत्ऽधा च मे जगत् च मे धनम् च मे वशः च मे त्विषिः च मे क्रीडा च मे मोदः च मे जातम् च मे जनिष्यमाणम् च मे सूक्तमिति सुऽउक्तम् च मे सुकृतमिति सुऽकृतम् च मे वित्तम् च मे वेद्यम् च मे भूतम् च मे भविष्यत् च मे

सुगमिति सुऽगम् च मे सुपथमिति सुऽपथम् च मे ऋद्धम् च मे ऋद्धिः च मे क्लृप्तम् च मे क्लृप्तिः च मे मतिः च मे सुमतिरिति सुऽमतिः च मे ॥ २ ॥

सा०भा० ज्यैष्ठ्यं प्रशस्ततमत्वम् । आधिपत्यं स्वामित्वम् । मन्युभामशब्दौ क्रोधावान्तरविशेषवाचिनौ । एको मानसः । अपरोऽक्षमादिलिङ्गजन्यो बाह्यः । अमोऽप्रमेयत्वं विरोधिभिरियत्तया परिछेत्तुमशक्यत्वम् । अम्भः शैत्यमाधुर्योपेतमुदकम् । जेमा जयसामर्थ्यम् । महिमा महत्त्वं जयसंपादितधनादिसंपत्तिः । वरिमा वरणीयत्वं पूज्यत्वम् । प्रथिमा गृहक्षेत्रादिविस्तारः । वर्ष्मा पुत्रपौत्रादिशरीराणि । द्राघुया पुत्रपौत्रादिविषयं दीर्घत्वम् । अविच्छिन्ना सन्ततिरित्यर्थः । वृद्धं प्रभूतमन्नं धनं च । वृद्धिर्विद्यादि गुणैरुत्कर्षः । सत्यं यथार्थभाषणम् । श्रद्धा परलोकोऽस्तीति बुद्धिः । जगत् जङ्गमाजङ्गमात्मकं गवादि । धनं सुवर्णादि । वशः सर्वस्वाधीनत्वम् । त्विषिः शरीरकान्तिः । क्रीडा अक्षद्यूतादिः । मोदः तज्जन्यो हर्षः । जातं पूर्वसिद्धापत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तं ऋक्समूहः । सुकृतं तज्जन्यमपूर्वम् । वित्तं पूर्वलब्धम् । वेद्यं इतः परं लब्धव्यं द्रव्यजातम् । भूतं पूर्वसिद्धं क्षेत्रादि । भविष्यत् संपत्स्यमानम् । सुगं सुष्ठु गन्तव्यं बन्धुजनयुक्तग्रामान्तरादि । सुपथं चोरादिरहितो मार्गः । ऋद्धं वर्धितं धनादिकं अनुष्ठितकर्मफलं वा । ऋद्धिः अनुष्ठास्यमानसत्रफलम् । क्लृप्तं समर्थं स्वकार्यक्षमद्रव्यम् । क्लृप्तिः स्वकीयसामर्थ्यम् । मतिः पदार्थमात्रनिश्चयः । सुमतिः दुर्घटराजकार्यादिनिश्चयः । २॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे अष्टमपाठके चमकभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥

॥ तृतीयमाह ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सी-

१ ख० अपरः क्षेपादिः ।

रं च मे लयश्च म ऋतं च मेऽमृतं च मे यक्ष्मं च मे ऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मे भयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे इति ॥

शम् च मे मयः च मे प्रियम् च मे अनुकामइत्यनुऽकामः च मे कामः च मे सौमनसः च मे भद्रम् च मे श्रेयः च मे वस्यः च मे यशः च मे भगः च मे द्रविणम् च मे यन्ता च मे धर्ता च मे क्षेमः च मे धृतिः च मे विश्वम् च मे महः च मे संविदिति संऽवित् च मे ज्ञात्रम् च मे सूः च मे प्रसूरिति प्रऽसूः च मे सीरम् च मे लयः च मे ऋतम् च मे अमृतम् च मे अयक्ष्मम् च मे अनामयत् च मे जीवातुः च मे दीर्घायुत्वमिति दीर्घायुऽत्वम् च मे अनमित्रम् च मे अभयम् च मे सुगमिति सुऽगम् च मे शयनम् च मे सूषेति सुऽउषा च मे सुदिनमिति सुऽदिनम् च मे ॥ ३ ॥

सा० भा० शं शब्द ऐहिकसुखवाची । मयः शब्द आमुष्मिकसुखवाची । प्रियं प्रीतिकारणं वस्तु । अनुकामः अनुकूलत्वनिमित्तेन काम्यमानः पदार्थः । एतदुभयं ऐहिकमेव तारतम्योपेतम् । कामः आयुष्मिकः स्वर्गादिकः । सौमनसः मनःस्वास्थ्यकरो बन्धुवर्गः । भद्रं कल्याणमिह लोके रमणीयम् । श्रेयः परलोकहितम् । वस्यः निवासहेतुर्गृहादिः । यशः कीर्त्तिः । भगः सौभाग्यम् । द्रविणं धनम् । यन्ता नियामक आचार्यादिः । धर्ता पोषकः पित्रादिः । क्षेमो विद्यमानधनस्य रक्षणशक्तिः । धृतिः धैर्यमापद्यपि निश्चलत्वम् । विश्वं सर्वजनानुकूल्यम् । महः पूजा । संवित् वेदशास्त्रादिविज्ञानम् । ज्ञात्रं ज्ञापयितृत्वसामर्थ्यम् । सूः पुत्रादिप्रेरणसामर्थ्यम् । प्रसूः भृत्यादिप्रेरणसामर्थ्यम् । सीरं गोलाङ्गलादि कृषिसाधनसम्पत्तिः । लयः तत्प्रतिबन्धनिवृत्तिः । ऋतं यज्ञादिकर्म । अमृतं तत्फलम् । अयक्ष्मं राजयक्ष्मादिप्रबलव्याधिराहित्यम् । अनामयत् ज्वरा-

चाल्पव्याधिराहित्यम् । जीवातुः जीवनकारणं व्याधिपरिहारार्थमौषधम् । दीर्घायुत्वं अपमृत्युराहित्यम् । अनमित्रं वैरिराहित्यम् । अभयं भयराहित्यम्। सुगं शोभनगमनम् सर्वैरङ्गीकृताचरणमित्यर्थः । शयनं शय्योपधानादिसम्पत्तिः। सूषा स्नानसंध्यावन्दनादियुक्तः शोभनः प्रातःकालः । सुदिनं यज्ञदानाध्ययनादियुक्तं कृत्स्नं दिनम् ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

## ॥ चतुर्थ माह ॥

ऊर्क्चमे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्चमे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्चमे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मे ऽक्षितिश्च मे कूयवाश्च मे ऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मे ऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे इति ॥ ४ ॥

ऊर्क् च मे सूनृता च मे पयः च मे रसः च मे घृतम् च मे मधु च मे सग्धिः च मे सपीतिरिति सऽपीतिः च मे कृषिः च मे वृष्टिः च मे जैत्रम् च मे औद्भिद्यमित्यौत् ऽभिद्यम् च मे रयिः च मे रायः च मे पुष्टम् च मे पुष्टिः च मे विभ्विति विऽभु च मे प्रभ्विति प्रऽभु च मे बहु च मे भूयः च मे पूर्णम् च मे पूर्णतरमिति पूर्णऽतरम् च मे अक्षितिः च

मे कूयवाः च मे अन्नम् च मे अक्षुत् च मे व्रीहयः च मे यवाः च मे माषाः च मे तिलाः च मे मुद्गाः च मे खल्वाः च मे गोधूमाः च मे मसुराः च मे प्रियङ्गवः च मे अणवः च मे श्यामाकाः च मे नीवाराः च मे ॥ ४ ॥

सा०भा० ऊर्क् अन्नसामान्यम्। सूनृता प्रियोक्तिः। पयः प्रभृतयोऽन्नविशेषाः। पयः क्षीरम्। रसः तत्रत्यं सारम्। घृतमधुनी प्रसिद्धे। सग्धिः बन्धुभिः सह भोजनमित्यर्थः। तथा सपीतिः सहपानम्। कृषिवृष्टी अन्नस्य हेतुत्वेन प्रसिद्धे। जैत्रं जयशीलं सुक्षेत्रमित्यर्थः। औद्भिद्यं उद्भिदां तरुगुल्मादीनामुत्पत्तिः। रयिः सुवर्णम्। रायो मणिमुक्तादिः। पुष्टं पूर्वोक्तमेव सुवर्णमतिसमृद्धम्। पुष्टिः शरीरपोषः। विभ्वादयः अक्षित्यन्ता धान्यविषया उत्तरोत्तराभिवृद्धयः सप्तापि तारतम्येन द्रष्टव्याः। न केवलं प्रवृद्धान्येव धान्यानि किन्तु अल्पान्यपीत्युच्यन्ते। कूयवाः कुत्सितयवा। अन्नं प्रसिद्धम्। अक्षुत् अन्नसाध्यः क्षुत्परिहारः। व्रीहियवमाषतिलमुद्गाः प्रसिद्धाः। खल्वाः मुद्गेभ्योऽपि स्थूलबीजाः। अथर्ववेदभाष्ये तु "खल्वाश्चणका" इति व्याख्यातम्। गोधूमाः प्रसिद्धाः। मसुराः मुद्गवत् सूपहेतवः। प्रियङ्गवः प्रसिद्धाः। अणवः सूक्ष्मशालयः। श्यामाकाः ग्राम्याः धान्यविशेषाः। नीवाराः आरण्याः॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमपाठके चमकभाष्ये चतुर्थोऽनुवाकः॥ ४॥

## ॥ पञ्चममाह ॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे

१ ख० ग० ङ० रसः क्षीरम्। घृतं तत्रत्यं सारम्। मधु प्रसिद्धम्। २ ख० सग्धिः सखीभिः बन्धुभिः ङ० सग्धिः सकुभिर्बन्धुभिः।

वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे इति ॥ ५ ॥

अश्मा च मे मृत्तिका च मे गिरयः च मे पर्वताः च मे सिकताः च मे वनस्पतयः च मे हिरण्यम् च मे अयः च मे सीसम् च मे त्रपुः च मे श्यामम् च मे लोहम् च मे अग्निः च मे आपः च मे वीरुधः च मे ओषधयः च मे कृष्टपच्यमिति कृष्टऽपच्यम् च मे अकृष्टपच्यमित्यकृष्टऽपच्यम् च मे ग्राम्याः च मे पशवः आरण्याः च यज्ञेन कल्पताम् वित्तम् च मे वित्तिः च मे भूतम् च मे भूतिः च मे वसु च मे वसतिः च मे कर्म च मे शक्तिः च मे अर्थः च मे एमः च मे इतिः च मे गतिः च मे ॥ ५ ॥

सा० भा० अश्मादयः प्रसिद्धाः । श्यामं कृष्णायसम् । लोहं कांस्यताम्रादि । अग्न्यादयः प्रसिद्धाः । ग्राम्यारण्यपशवो यज्ञेन निमित्तीभूतेन कल्पन्तां समर्था भवन्तु । वित्तं पूर्वलब्धम् । वित्तिर्भाविलाभः । भूतं ऐश्वर्योपेतं पुत्रादिकम् । भूतिः स्वकीयमैश्वर्यादिकम् । वसु निवाससाधनं गवादिकम् । वसतिर्निवासाधारो गृहादिः । कर्म अग्निहोत्रादिकम् । शक्तिः तदनुष्ठानसामर्थ्यम् । अर्थः प्रयोजनविशेषः । एमः एतव्यं प्राप्तव्यं सुखम् । इतिः अयनं इष्टप्राप्त्युपायः । गतिः इष्टप्राप्तिः ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये पञ्चमोऽनुवाकः ॥

॥ षष्ठमाह ॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च

म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे इति ॥ ६ ॥

अग्निः च मे इन्द्रः च मे सोमः च मे इन्द्रः च मे सविता च मे इन्द्रः च मे सरस्वती च मे इन्द्रः च मे पूषा च मे इन्द्रः च मे बृहस्पतिः च मे इन्द्रः च मे मित्रः च मे इन्द्रः च मे वरुणः च मे इन्द्रः च मे त्वष्टा च मे इन्द्रः च मे धाता च मे इन्द्रः च मे विष्णुः च मे इन्द्रः च मे अश्विनौ च मे इन्द्रः च मे मरुतः च मे इन्द्रः च मे विश्वे च मे देवाः इन्द्रः च मे पृथिवी च मे इन्द्रः च मे अन्तरिक्षम् च मे इन्द्रः च मे द्यौः च मे इन्द्रः च मे दिशः च मे इन्द्रः च मे मूर्द्धा च मे इन्द्रः च मे प्रजापतिरिति प्रजाऽपतिः च मे इन्द्रः च मे ॥ ६ ॥

सा०भा० अग्न्यादयः प्रसिद्धा देवतास्तैः सर्वैः सह समानभागोपेतत्वात् इन्द्र एकैकया देवतया सह पठ्यते। दिक्शब्देन प्राच्यादिचतस्र उच्यन्ते। मूर्धशब्देन चोर्ध्वा दिक्। सा च मुख्यत्वाभिप्रायेण पृथक् निर्दिष्टा ॥

इति श्रीसायणाचार्य विरचिते माधवीये वेदार्थप्रकाशे यजुः संहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये षष्ठोनुऽवाकः ॥

॥ सप्तमामह ॥

अ॒ꣳशुश्च॑ मे र॒श्मिश्च॒ मेऽदा॑भ्यश्च॒ मेऽधि॑पतिश्च म उपा॒ꣳशुश्च॑ मेऽन्तर्या॒मश्च॑ म ऐन्द्रवाय॒वश्च॑ मे मैत्रावरु॒णश्च॑ म आश्वि॒नश्च॑ मे प्रतिप्र॒स्थान॑श्च मे शु॒क्रश्च॑ मे म॒न्थी च॑ म आग्रय॒णश्च॑ मे वैश्वदे॒वश्च॑ मे ध्रु॒वश्च॑ मे वैश्वान॒रश्च॑ म ऋतुग्र॒हाश्च॑ मेऽतिग्राह्या॑श्च म ऐन्द्रा॒ग्नश्च॑ मे वैश्वदे॒वश्च॑ मे मरुत्व॒तीया॑श्च मे माहे॒न्द्रश्च॑ म आदि॒त्यश्च॑ मे सावि॒त्रश्च॑ मे सारस्व॒तश्च॑ मे पौ॒ष्णश्च॑ मे पात्नीव॒तश्च॑ मे हारियोज॒नश्च॑ मे इति ॥ ७ ॥

अ॒ꣳशुः च॒ मे॒ र॒श्मिः च॒ मे॒ अदा॑भ्यः च॒ मे॒ आधि॑पति॒रित्यधि॑ऽपतिः च॒ मे॒ उपा॒ꣳशुरित्यु॑पऽअ॒ꣳशुः च॒ मे॒ अ॒न्त॒र्या॒मइत्य॑न्तःऽयामः च॒ मे॒ ऐ॒न्द्र॒वा॒य॒व इत्यै॑न्द्रऽवा॒य॒वः च॒ मे॒ मै॒त्रा॒व॒रु॒ण इति॑ मै॒त्राऽव॒रु॒णः च॒ मे॒ आ॒श्वि॒नः च॒ मे॒ प्र॒ति॒प्र॒स्था॒न इति॑ प्रतिऽप्रस्थान॑ः च॒ मे॒ शु॒क्रः च॒ मे॒ म॒न्थी च॒ मे॒ आ॒ग्र॒य॒णः च॒ मे॒ वै॒श्व॒दे॒व इति॑ वैश्वऽदे॒वः च॒ मे॒ ध्रु॒वः च॒ मे॒ वै॒श्वा॒न॒रः च॒ मे॒ ऋ॒तु॒ग्र॒हा इत्यृ॑तुऽग्रहाः च॒ मे॒ अ॒ति॒ग्रा॒ह्या॑ इत्य॑तिऽग्रा॒ह्या॑ः च॒ मे॒ ऐ॒न्द्रा॒ग्न इत्यै॑न्द्रऽअ॒ग्नः च॒ मे॒ वै॒श्व॒दे॒व इति॑ वैश्वऽदे॒वः च॒ मे॒ म॒रु॒त्व॒तीया॑ः च॒ मे॒ मा॒हे॒न्द्र इति॑माहाऽइन्द्रः च॒ मे॒ आ॒दि॒त्यः च॒ मे॒ सा॒वि॒त्रः च॒ मे॒ सा॒र॒स्व॒तः च॒ मे॒ पौ॒-

ष्णः च मे पात्नीवत इति पात्नीऽवतः च मे हारियोजन इति हारिऽयोजनः च मे ॥ ७ ॥

सा० भा० अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः । तत्र रश्मिग्रहादर्शनाददाभ्यस्यैव ग्रहस्य गृह्यमाणत्वादंशं पृथक् कृत्य रश्मिशब्देन निर्दिश्यते । रश्मीनां तु तद्ग्रहणसाधनत्वात् । तथा च तद्ग्रहणमन्त्रः पठ्यते । "शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः" इति । अधिपतिशब्देन दधिग्रहो विवक्षितः । तस्य च श्रेष्ठत्वादाधिपत्यम् । अतएव श्रूयते । "ज्येष्ठो वा एष ग्रहाणाम्" इति । प्रतिप्रस्थानशब्देन द्विदेवत्यग्रहसहभावी प्रतिनिर्ग्राह्यो विवक्षितः । ध्रुवाख्यस्यैव ग्रहस्यावनयनदशायां वैश्वानरसूक्तपाठात् तदवस्थापन्नो वैश्वानरशब्देनोच्यते । आद्यो वैश्वदेवः प्रातःसवनगतः । उत्तरस्तृतीयसवनगतः । सारस्वतग्रहोऽभिषेचनीयाख्यविकृतौ द्रष्टव्यः । "सारस्वतं ग्रहं गृह्णाति" इतितत्राम्नानात् । एवं पौष्णोऽपि विकृतिगामी द्रष्टव्यः ॥

इति श्रीसायणाचार्य विरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये सप्तमोऽनुवाकः ॥

॥ अष्टममाह ॥

इध्मश्चं मे बर्हिश्चं मे वेदिंश्च मे धिष्णियाश्च मे स्रुचंश्च मे चमसाश्चं मे ग्रावाणश्च मे स्वरंवश्च म उपरवाश्चं मे धिषवंणे च मे द्रोणकलशश्चं मे वायव्यानि च मे पूतभृच्चं म आधवनीयंश्च म आग्नींध्रं च मे हविर्धानं च मे गृहाश्चं मे सदंश्च मे पुरोडाशाश्च मे पचताश्चं मेऽवभृथश्चं मे स्वगाकारश्चं मे इति ॥ ८ ॥

इध्मः च मे बर्हिः च मे वेदिः च मे धिष्णियाः च मे स्रुचः च मे चमसाः च मे ग्रावाणः च मे स्वरंवः च मे

1 (ख० ङ०) प्रतिनिधिग्राह्यो (ग०) प्रतिनिग्राह्या । २ (ग० ङ०) गृण्हामीति ।

उपरवा इत्युंपऽरवाः च मे अधिषवंणे इत्यधिऽसवंने च मे द्रोणकलश इतिं द्रोणऽकलशः च मे वायव्यांनि च मे पूतभृदितिं पूतऽभृत् च मे आधवनीय इत्यांऽधवनीयंः च मे आग्नींध्रमित्याग्निंऽइध्रं च मे हविर्धानमितिं हविःऽधानंम् च मे गृहाः च मे सदंः च मे पुरोडाशाः च मे पचताः च मे अवभृथ इत्यंवऽभृथः च मे स्वगाकार इतिं स्वगाऽकारः च मे ॥ ८ ॥

सा० भा० इध्मादीनि यज्ञाङ्गद्रव्याणि यज्ञप्रकरणे प्रसिद्धानि । गृहाः पत्नीशालादयः । पंचताः[1] शामित्रादयः । स्वगाकारः शंयुवाकः । तेन हि यथास्वं देवतानां हविर्गमनं क्रियते ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये अष्टमोऽनुवाकः ॥ ८ ॥

॥ नवममाह ॥

अग्निश्चं मे घर्मश्चं मेऽर्कश्चं मे सूर्यंश्च मे प्राणश्चं मेऽश्वमेधश्चं मे पृथिवी च मेऽदितिश्च मे दितिंश्च मे द्यौश्चं मे शक्करी रङ्गुलंयो दिशंश्च मे यज्ञेनं कल्पन्तामृक्च मे सामं च मे स्तोमंश्च मे यजुंश्च मे दीक्षा चं मे तपंश्च म ऋतुश्चं मे व्रतं चं मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे चं मे यज्ञेनं कल्पेताम् इति ॥ ९ ॥

अग्निः च मे घर्मः च मे अर्कः च मे सूर्यः च मे प्राण इतिं प्रऽअनः च मे अश्वमेध इत्यंश्वऽमेधः च मे पृथिवी च मे अदितिः च मे दितिः च मे द्यौः च मे शक्करीः अङ्गुलंयः

[1] (ख०) पचताः सदःशामित्रादयः । क्षुद्रानयज्ञाः ।

दिशः च मे यज्ञेन कल्पताम् ऋक् च मे साम च मे स्तोमः च मे यजुः च मे दीक्षा च मे तपः च मे ऋतुः च मे व्रतम् च मे अहोरात्रयोरित्यहः॒ऽरात्रयोः वृष्ट्या बृहद्रथन्तरे इति बृहत्ऽरथन्तरे च मे यज्ञेन कल्पेताम् ॥ ९ ॥

सा० भा० अग्निश्चीयमानो वन्हिः। घर्मः प्रवर्ग्यः। 'इन्द्रायार्कवते पुरोडाशं' इति विहितो यागोऽर्कः। 'सौर्यं चरुं' इति विहितो यागः सूर्यः। 'प्राणाय स्वाहा' इति विहितो होमः प्राणः। अश्वमेधः प्रसिद्धः। पृथिव्यादयो देवताविशेषाः। शक्करस्यायं शक्वर्यः। अङ्गुल्योऽङ्गुलिवद्विराट्पुरुषस्यावयवविशेषाः। दिशः प्राच्याद्याः। च शब्दात् विदिशोऽपि। ताः सर्वाः मे मदीयेन यज्ञेन कल्पन्तां स्वस्वव्यापारसमर्था भवन्तु। ऋगादयो मन्त्रविशेषाः। स्तोमः सामावृत्तिरूपं स्तोत्रम्। दीक्षा यजमानसंस्कारः। तपः पापक्षयार्थमनशनादि। ऋतुः यज्ञाङ्गभूतः कालः। व्रतमेकस्तनादि। अहोरात्रयोः सम्बन्धिनी या वृष्टिः तया मदीयं सस्यं कल्पतामिति शेषः। बृहद्रथन्तरे सामनी। ते च मदीयेन यज्ञेन कल्पेतां स्वस्वव्यवहारसमर्थे भवेताम् ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये नवमोऽनुवाकः ॥ ९ ॥

## ॥ दशममाह ॥

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वान् च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्प-

१ (स० ग०ड०) रुद्राया। २ शक्करस्यायमित्यक्षराण्यसंबद्धार्थानीतिभाति।

तां चक्षुर्यज्ञेन कल्पता ँ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् इति ॥ १० ॥

गर्भाः च मे वत्साः च मे त्र्यविरिति त्रिऽअविः च मे त्र्यवीति त्रिऽअवी च मे दित्यवाडिति दित्यऽवाट् च मे दित्यौही च मे पञ्चाविरिति पञ्चऽअविः च मे पञ्चावीति पञ्चऽअवी च मे त्रिवत्स इति त्रिऽवत्सः च मे त्रिवत्सेति त्रिऽवत्सा च मे तुर्यवाडिति तुर्यऽवाट् च मे तुर्यौही च मे पष्ठवादिति पष्ठऽवात् च मे पष्ठौही च मे उक्षा च मे वशा च मे ऋषभः च मे वेहत् च मे अनड्वान् च मे धेनुः च मे आयुः यज्ञेन कल्पताम् प्राण इति प्रऽअनः यज्ञेन कल्पताम् अपानइत्यपऽअनः यज्ञेन कल्पताम् व्यान इति विऽअनः यज्ञेन कल्पताम् चक्षुः यज्ञेन कल्पताम् श्रोत्रम् यज्ञेन कल्पताम् मनः यज्ञेन कल्पताम् वाक् यज्ञेन कल्पताम् आत्मा यज्ञेन कल्पताम् यज्ञः यज्ञेन कल्पताम्॥१०॥

सा० भा० गर्भाः वत्साश्च प्रसिद्धाः। सार्धसंवत्सरो वत्सरूपः पुङ्गवस्त्र्यविः । तथाविधा गौस्त्र्यवी । द्विसंवत्सर ऋषभो दित्यवाट् । तथाविधा गौर्दित्यौही । सार्द्धद्विसंवत्सर ऋषभः पञ्चाविः । तथाविधा गौः पञ्चावी । संवत्सरत्रयोपेत ऋषभः त्रिवत्सः । तथाविधा गौः त्रिवत्सा । सार्धत्रिवत्सर ऋषभस्तुर्यवाट्। तथाविधा गौस्तुर्यौही । चतुःसंवत्सर ऋषभः पष्ठवाट्[1] । तथाविधा गौः पष्ठौही । सेचनसमर्थ ऋषभ उक्षा । वन्ध्या गौर्वशा । उक्ष्णोऽप्यधिकवयस्क ऋषभः । गर्भघातिनी गौर्वेहत् । शकटस्य वाहकोऽनड्वान् । नवप्रसूता गौर्धेनुः । आयुरा-

1 अत्र मूर्धन्यपाठ एव साधीयान् व्याकरणसिद्धत्वात्पूर्वोत्तरानुकूल्याच्च ।

दयः प्रसिद्धाः । आत्मा शरीरम् । उक्ता आयुरादयो मदीयेन यज्ञेन कार्यक्षमा भवन्तु । यज्ञः करिष्यमाणोऽश्वमेधादिः सोऽप्यनेनानुष्ठीयमानेन यज्ञेन स्वकार्यक्षमो भवतु ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चमकभाष्ये दशमोऽनुवाकः ॥ १० ॥

## ॥ एकादशमाह ॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च इति ॥ ११ ॥

एका च मे तिस्रः च मे पञ्च च मे सप्त च मे नव च मे एकादश च मे त्रयोदशेति त्रयःऽदश च मे पञ्चदशेति पञ्चऽदश च मे सप्तदशेति सप्तऽदश च मे नवदशेति नवऽदश च मे एकविꣳशतिरित्येकऽविꣳशतिः च मे त्रयोविꣳशतिरिति त्रयःऽविꣳशतिः च मे पञ्चविꣳशतिरिति पञ्चऽविꣳशतिः च मे सप्तविꣳशतिरिति सप्तऽविꣳशतिः च मे नवविꣳश-

तिरिति नवऽविꣳशतिः च मे एकत्रिꣳशदित्येकऽत्रिꣳशत् च मे त्रयस्त्रिꣳशदिति त्रयःऽत्रिꣳशत् च मे चतस्रः च मे अष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिः च मे चतुर्विꣳशतिरिति चतुःऽविꣳशतिः च मे अष्टाविꣳशतिरित्यष्टाऽविꣳशतिः च मे द्वात्रिꣳशत् च मे षट्त्रिꣳशदिति षट्ऽत्रिꣳशत् च मे चत्वारिꣳशत् च मे चतुश्चत्वारिꣳशदिति चतुःऽचत्वारिꣳशत् च मे अष्टाचत्वारिꣳशदित्यष्टाऽचत्वारिꣳशत् च मे वाजः च प्रसव इति प्रऽसवः च अपिज इत्यपिऽजः च क्रतुः च सुवः च मूर्धा च व्यश्निय इति विऽअश्नियः च आन्त्यायनः च अन्त्यः च भौवनः च भुवनः च अधिपतिरित्यधिऽपतिः च ॥११॥

सा०भा० एकादिशब्दाः संख्यापराः। वाजादयः सर्वे मम सन्त्विति शेषः। वाजोऽन्नम्। प्रसवस्तस्योत्पत्तिः। अपिजस्तस्यैव पुनःपुनरुत्पत्तिः। क्रतुः संकल्पो भोगादिविषयः यागो वा। सुवस्तस्योत्पत्तौ हेतुरादित्यः। मूर्धा द्यौः। व्यश्नियः विशेषेणाश्नुते व्याप्नोतीति व्यश्न आकाशादिस्तत्र भवः व्यश्नियः। आन्त्यायनः अन्ते जातः। अन्त्यः अन्ते भवः स्थितः। भुवने भवः भौवनः। भुवनः जगदात्मकः। अधिपतिः अधिष्ठाय पालयिता। 'राजा' इति अहोबलभाष्ये। अथवा वाजादयश्चैत्रादिमासानां नामविशेषाः। तदानीं ते सर्वे प्रीणन्तु इति वाक्यशेषः। चकाराः परस्परसमुच्चयार्थाः। अनुक्तकालादिदेवतासमुच्चयार्था वा॥ ११॥

॥ यथोक्तैकादशानुवाकरूपमन्त्रसाध्यं होमं विधत्ते ॥

वसोर्धारां जुहोति वसोर्मे धारा ऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिꣳल्लोके पिन्वमानोपतिष्ठत इति॥ १॥

वसोः धाराम् जुहोति वसोः मे धारा असव् इति वै एषा हुयते घृतस्य वै एनम् एषा धारा अमुष्मिन् लोके पिन्वमाना उपैति तिष्ठते ॥ १ ॥

सा०भा० वसोर्धनस्य धारा सान्तत्यं ययाहुत्या लभ्यते सेयमाहुतिर्वसोर्धारा तां जुहुयात् । तदेतदुक्तनिर्वचनं सूच्यते । यो यजमानो जुहोति स प्रथमं मम धननैरन्तर्यं भूयादित्येवं कामयते । ततस्तेनेयमाहुतिर्हूयते तेन होमेन एनं यजमानं स्वर्गे लोके घृतस्य धारा पिन्वमाना प्रीणयति सेवते ॥ १ ॥

॥ तत्र द्रव्यं विधत्ते ॥

आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवाऽस्मै तेजोऽवरुन्ध इति ॥ २ ॥

आज्येन जुहोति तेजः वै आज्यम् तेजः वसोः धारा तेजसा एव अस्मै तेजः अवेति रुन्धे ॥ २ ॥

सा०भा० सुवर्णादिधनसमृद्धेरपि ध्रुवं तेजोरूपत्वं प्रसिद्धम् ॥ २ ॥

॥ कामप्राप्तिहेतुत्वेनाऽपि तामाहुतिं प्रशंसति ॥

अथो कामा वै वसोर्धारा कामानेवाऽवरुन्ध इति ॥ ३ ॥

अथो इति कामाः वै वसोः धारा कामान् एव अवेति रुन्धे ॥ ३ ॥

॥ अन्वयव्यतिरेकाभ्यां सान्तत्यं विधत्ते ॥

यं कामयेत प्राणानस्याऽन्नाद्यं विच्छिंन्द्यामिति विग्राहं तस्य जुहुयात्प्राणानेवाऽस्याऽन्नाद्यं विच्छिनत्ति ॥ ४ ॥

यम् कामयेत प्राणानिति प्रऽअनान् अस्य अन्नाद्यमित्यं-

प्रऽअद्यंम् वीतिं छिन्द्याम् इतिं विग्राहमितिं विऽग्राहंम् तस्यं जुहुयाव् प्राणानितिं प्रऽअनान् एव अस्य अन्नाद्यमित्यंन्नऽअद्यंम् वीतिं छिनत्ति ॥ ४ ॥

यं कामयेतप्राणानंस्याऽन्नाद्यꣳ संतंनुयामिति सन्ततां तस्यं जुहुयात्प्राणानेवाऽस्याऽन्नाद्यꣳ संतंनोतीति ॥ ५ ॥

यम् कामयेत प्राणानितिं प्रऽअनान् अस्य अन्नाद्यमित्यंन्नऽअद्यंम् समितिं तनुयाम् इतिं संतंतामिति सम्ऽतताम् तस्यं जुहुयाव् प्राणानितिं प्रऽअनान् एव अस्य अन्नाद्यमित्यंन्नऽअद्यंम् समितिं तनोति ॥ ५ ॥

वा० भा० यस्य यजमानस्य प्राणानन्नं च विच्छिन्द्यामित्येवं द्विषन्नध्वर्युरेतं मन्त्रं मध्ये विगृह्य जुहुयात् । यस्तु प्राणानामन्नस्य सान्तत्यं कामयते सोऽयं सन्ततामाहुतिं जुहुयात् ॥ ५ ॥

अथ वाजश्च म इत्यादीनि अन्नं च मे क्षुच्च म इत्यतः प्राक्तानि चतुश्चत्वारिंशदधिकशतसंख्याकानि वाक्यानि तानि द्वादश संघरूपेण विभज्य प्रशंसति ॥

द्वादंश द्वादशानिं जुहोति द्वादंश मासाः संवत्सरः संवत्सरेणैवाऽस्मा अन्नमवरुन्ध इति ॥ ६ ॥

द्वादंश द्वादशानिं जुहोति द्वादंश मासाः संवत्सर इतिं सम्ऽवत्सरः संवत्सरेणेतिं सम्ऽवत्सरेणं एव अस्मै अन्नम् अवेतिं रुन्धे ॥ ६ ॥

---

१ अत्र प्राक्तनानीतिपाठः साधीयान् इतिभाति ।

सा०भा० द्वादशानां वाक्यानां समूहो द्वादशम्। तानि च द्वादशानि पुनर्द्वादशसंख्याकानि। तथा सति चतुश्चत्वारिंशदधिकशतसंख्या संपद्यते। तदन्तर्गतद्वादशसंख्यायाः मासद्वारा संवत्सररूपत्वात् संवत्सरं साध्यमन्नं प्राप्नोति ॥ ६ ॥

॥ अथ चतुर्थानुवाकगतानि वाक्यानि प्रशंसति ॥

अन्नं च मे क्षुच्च म इत्याहैतद्वा अन्नस्य रूप ँ रूपेणैवाऽन्नमवरुन्ध इति ॥ ७ ॥

अन्नम् च मे अक्षुत् च मे इति आह एतत् वै अन्नस्य रूपम् रूपेण एव अन्नम् अवेति रुन्धे ॥ ७ ॥

सा०भा० अन्नमित्यादिभिर्वाक्यैर्यत् प्रतिपाद्यं तत्सर्वमन्नस्य रूपम्। क्षुदभावस्यान्नसाध्यत्वात् उपरितनानां च व्रीह्यादीनामन्नसाधनत्वात् ॥ ७ ॥

॥ अथ पञ्चमानुवाकगतवाक्यानि प्रशंसति ॥

अग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनिः सयोन्येवाऽन्नमवरुन्ध इति ॥ ८ ॥

अग्निः च मे आपः च मे इति आह एषा वै अन्नस्य योनिः सयोनीति सऽयोनि एव अन्नम् अवेति रुन्धे ॥ ८ ॥

सा०भा० अग्नेः पाकहेतुत्वादन्नयोनित्वम्। अपां चौषधिजनकत्वादन्नयोनित्वम्। एतन्मन्त्रपाठेन अनेकप्रकारकारणसहितमन्नं प्राप्नोति ॥ ८ ॥

॥ अथ षष्ठानुवाकगतानि वाक्यानि प्रशंसति ॥

अर्धेन्द्राणि जुहोति देवता एवाऽवरुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवाऽस्मिन्नुपरिष्टाद्दधाति इति ॥ ९ ॥

---

१ (क०) तदन्तश्च। (घ०) ततद्वादश।

अर्धेन्द्राणीत्यर्धऽइन्द्राणि जुहोति देवताः एव अवेति रुन्धे यत् सर्वेषाम् अर्धम् इन्द्रः प्रतीति तस्मात् इन्द्रः देवतानाम् भूयिष्ठभाक्तम इति भूयिष्ठभाक्ऽतमः इन्द्रम् उत्तरमित्युत्ऽतरम् आह इन्द्रियम् एव अस्मिन् उपरिष्टात् दधाति ॥ ९ ॥

सा०भा० येषां वाक्यानामर्धेष्विन्द्रः पठ्यते तान्यर्धेन्द्राणि । तेषु वाक्येषु अग्नीषोमादीनां देवतानां पूर्वार्धेष्वाम्नातत्वात् देवताः प्राप्नोति यद्यस्मात्कारणात् । सर्वेषां वाक्यानां प्रत्यर्धमिन्द्रः पठ्यते तस्मात्कारणात् अयमिन्द्रो भूयिष्ठभाक्तमः । भूयिष्ठं प्रभूतं हविर्भजतीति भूयिष्ठभाक् अतिशयेन तादृशः । यस्माद्वेद इन्द्रमत्रोत्तरार्धगतं प्राह । तस्मादस्मिन् यजमानेऽप्युपरिष्टाच्छिरोभागे चक्षुरादि इन्द्रियं स्थापयति ॥ ९ ॥

॥ सप्तमाष्टमयोरनुवाकयोरवस्थितानि वाक्यानि प्रशंसति ॥

यज्ञायुधानि जुहोति यज्ञो वै यज्ञायुधानि यज्ञमेवाऽवरुन्धेऽथो एतद्वै यज्ञस्य रूपꣳरूपेणैव यज्ञमवरुन्ध इति ॥ १० ॥

यज्ञायुधानीति यज्ञऽआयुधानि जुहोति यज्ञः वै यज्ञायुधानीति यज्ञऽआयुधानि यज्ञम् एव अवेति रुन्धे अथो इति एतत् वै यज्ञस्य रूपम् रूपेण एव यज्ञम् अवेति रुन्धे॥१०॥

सा० भा० अंश्वदाभ्यादिग्रहरूपाणि यज्ञसाधनानि साक्षाद्यज्ञनिष्पादकत्वात् यज्ञस्वरूपाणि । इध्माबर्हिरादिभिर्यज्ञः परम्परया निरूप्यते । ननु ग्रहैरिव साक्षान्निष्पाद्यते । तस्मात्तानि यज्ञस्य रूपमेतैरन्तरङ्गैर्बहिरङ्गैश्च यज्ञायुधैर्यज्ञं प्राप्नोति ॥ १० ॥

॥ अन्तिमस्य स्वगाकारवाच्यस्य तात्पर्यं दर्शयति ॥

अवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्या इति॥११॥

---

१ (ख० ग० ङ०) वेदमन्त्रोत्तरार्धं । २ (ख०) अस्य ग्रहरूपाणि । ३ (घ०) वाक्यस्य ।

अवभृथ इत्यवऽभृथः च मे स्वगाकार इति स्वगाऽकारः च मे इति आह स्वगाकृत्या इति स्वगाऽकृत्यै ॥ ११ ॥

सा० भा० स्वाधीनत्वकरणायेत्यर्थः ॥ ११ ॥

॥ नवमानुवाके पूर्वार्धगतानि वाक्यानि प्रशंसति ॥

अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूप ँ रूपेणैव ब्रह्मवर्चसमवरुन्ध इति ॥ १२ ॥

अग्निः च मे घर्मः च मे इति आह एतत् वै ब्रह्मवर्चसस्येति ब्रह्मऽवर्चसस्य रूपम् रूपेण एव ब्रह्मवर्चसमिति ब्रह्मऽवर्चसम् अवेति रुन्धे ॥ १२ ॥

सा०भा० अग्न्यादिभिर्ब्राह्मणकर्मनिष्पत्तेरेतेषां ब्रह्मवर्चसरूपत्वम् ॥ १२ ॥

एतस्मिन्नेवानुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति ॥

ऋक्च मे साम च म इत्याहैतद्वै छन्दसा ँ रूप ँ रूपेणैव छन्दा ँ स्यवरुन्ध इति ॥ १३ ॥

ऋक् च मे साम च मे इति आह एतत् वै छन्दसाम् रूपम् रूपेण एव छन्दा ँ सि अवेति रुन्धे ॥ १३ ॥

सा०भा० ऋगादिकं छन्दसां वेदानां स्वरूपमिति प्रसिद्धम् ॥ १३ ॥

॥ दशमानुवाके पूर्वार्धगतवाक्यानि प्रशंसति ॥

गर्भाश्च मे वत्साश्च म इत्याहैतद्वै पशूना ँ रूप ँ रूपेणैव पशूनवरुन्ध इति ॥ १४ ॥

गर्भाः च मे वत्साः च मे इति आह एतत् वै पशूनाम् रूपम् रूपेण एव पशून् अवेति रुन्धे ॥ १४ ॥

सा०भा० गर्भवत्सादीनां पशुरूपत्वं प्रसिद्धम् ॥ १४ ॥

॥ तस्मिन्ननुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति ॥

कल्पान्जुहोत्यकॢप्तस्य कॢप्त्यै इति ॥ १५ ॥

कल्पान् जुहोति अकॢप्तस्य कॢप्त्यै ॥ १५ ॥

सा०भा० 'आयुर्यज्ञेन कल्पतां-' इत्यादयो मन्त्राः कल्पाः । पूर्वं यद्यद्वस्त्वकॢप्तं स्वस्वकार्यसमर्थं न भवति तस्य तस्य सामर्थ्यायायं होमः ॥ १५ ॥

॥ एकादशानुवाके पूर्वभागगतानि वाक्यानि प्रशंसति ॥

युग्मदयुजे जुहोति मिथुनत्वाय इति ॥ १६ ॥

युग्मदयुज इति युग्मत्ऽअयुजे जुहोति मिथुनत्वायेति मिथुनऽत्वाय ॥ १६ ॥

सा०भा० 'चतस्रश्च मेऽष्टौ च मे-' इत्यादिकं समसंख्यारूपं युग्मम् । 'एका च मे तिस्रश्च मे-' इत्यादि विषमसंख्यारूपमयुग्मं राशिद्वयम् । स्त्रीपुरुषवत् परस्परविलक्षणत्वात् मिथुनत्वाय[1] संपद्यते ॥ १६ ॥

॥ राशिद्वयेऽप्युत्तरोत्तराधिक्यं प्रशंसति ॥

उत्तरावती भवतोऽभिक्रान्त्या इति ॥ १७ ॥

उत्तरावती इत्युत्तराऽवती भवतः अभिक्रान्त्या इत्यभिऽक्रान्त्यै ॥ १७ ॥

सा० भा० एकत्वादुत्तरं त्रित्वम् । तस्माच्चोत्तरं पञ्चत्वम् । तथा चतुर्थादुत्तरमष्टत्वम् । तस्माच्चोत्तरं द्वादशत्वम् । एवमुभयोरुत्तरावत्त्वेनाभितो व्याप्तिर्भवति ॥ १७ ॥

॥ युग्मायुग्मसंख्यावाचिशब्दानां तात्पर्यं दर्शयति ॥

एका च मे तिस्रश्च म इत्याह देवछन्दसं वा एका च ति-

1 (क०) मिश्रकत्वाय ।

स्रश्च मनुष्यछन्दसं चतंस्रश्चाऽष्टौ च देवछन्दसं चैव मनुष्य-छन्दसं चाऽवरुन्ध इति ॥ १८ ॥

एका च मे तिस्रः च मे इति आह देवछन्दसमिति देवऽ-छन्दसम् वै एका च तिस्रः च मनुष्यछन्दसामिति मनुष्यऽछ-न्दसम् चतस्रः च अष्टौ च देवछन्दसमिति देवऽछन्दसम् च एव मनुष्यछन्दसमिति मनुष्यऽछन्दसम् च अवेति रुन्धे॥१८॥

सा०भा० विषमसंख्यया देवानां प्रियाणि छन्दांसि निष्पाद्यन्ते । समसंख्यया तु मनुष्यप्रियाणि । अतस्तदुभयं प्राप्नोति ॥ १८ ॥

॥ राशिद्वयेऽप्युत्तरोत्तरसंख्यावृद्धेरवधिं प्रशंसति ॥

आत्रयंस्त्रिंᳪशतो जुहोति त्रयंस्त्रिंᳪशद्वै देवता देवता एवाऽ-वरुन्ध आऽष्टाचत्वारिंᳪशतो जुहोत्यष्टा चत्वारिंᳪशदक्षरा जगती जागताः पशवो जगत्यै वाऽस्मैं पशूनवरुन्ध इति ॥१९॥

एति त्रयस्त्रिंᳪशत इति त्रयःऽत्रिंᳪशतः जुहोति त्रयस्त्रिंᳪशादिति त्रयःऽत्रिंᳪशत् वै देवताः देवताः एव अवेति रुन्धे एति अष्टाचत्वारिंᳪशत इत्यष्टाऽचत्वारिंᳪशतः जुहोति अष्टाचत्वारिंᳪशदक्षरेत्यष्टाचत्वारिंᳪशत्ऽअक्षरा जगती जागताः पशवः जगत्या एव अस्मै पशून् अवेति रुन्धे ॥ १९ ॥

॥ अस्मिन्ननुवाके उत्तरभागगतानि वाक्यानि प्रशंसति ॥

वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादशमासाः संवत्सरः संवत्सर एव प्रतितिष्ठति इति ॥ २० ॥

वाजः च प्रसव इति प्रऽसवः च इति द्वादशम् जुहोति द्वादश मासाः संवत्सर इति सम्ऽवत्सरः संवत्सर इति सम्ऽवत्सरे एव प्रतीति तिष्ठति ॥ २१ ॥

सा॰भा॰ अत्र विनियोगसंग्रहः। 'अग्नाविष्णू' 'वसोर्धारां' एकादशभिरादितः अनुवाकैर्जुहोत्येकामाहुतिं सन्ततां घृतादिति ॥ २१ ॥

॥ अथ मीमांसा ॥

द्वादशाध्यायस्य तृतीयपादे चिन्तितम्। "मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वात्र सन्ततेः । आद्यो होमेषु सन्तत्या द्वादशान्तेषु तद्गतिः" । अग्नौ किंचित्कर्म विहितम् । सन्ततां वसोर्धारां जुहोतीति । तत्र सान्तत्यमच्छिन्नत्वम् । तच्च मन्त्रकर्मणोः सहोपक्रमे सत्युपपद्यते । तस्मान्मन्त्रादौ कर्मसन्निपात इति प्राप्ते ब्रूमः । तस्मिन् वसोर्धाराकर्मणि "द्वादश द्वादशानि जुहोति" इति श्रुतेः । द्वादशभिर्मन्त्रवाक्यैः संपाद्यमेकाहुतिस्वरूपम् । तद्यथा ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्चमे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च म इति ॥ २२ ॥

सा॰भा॰ इत्येतैर्द्वादशभिर्मन्त्रवाक्यैरेकाहुतिर्होतव्या । ईदृशा उत्तरा आहुतयः। "प्राणश्च मेऽपानश्च मे" इत्यादिभिर्निष्पाद्याः । ते च होमा द्वादश । तेषु मध्ये विलम्बाभावः सान्तत्यम् । न तु मन्त्रकर्मणोः सहोपक्रमः । तस्मात् पूर्वन्यायेन मन्त्रान्ते कर्मसन्निपातस्य नास्ति विघ्नः ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुःसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके चमकभाष्ये एकादशोऽनुवाकः ॥ ११ ॥

॥ इति चमकभाष्यं समाप्तम् ॥

॥ अथ ॥

## ॥ सभाष्यरुद्राध्यायशुद्धाशुद्धपत्रकम् ॥

| पृष्ठम् । | पङ्क्तिः। | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १ | २५ | २ इव०ङ०संज्ञकपुस्तके | २ ख०ङ० संज्ञकपुस्तकयोः |
| २ | ३० | ह्रूमः | ह्रूमः |
| ४ | ११ | मधिष्टाय | मधिष्ठाय |
| ६ | १० | स॰ स्कुर्वता | समस्कुर्वता |
| ७ | २ | तन्दुलेन | तण्डुलेन |
| ८ | ८ | तन्दुल | तण्डुल |
| ,, | १६ | त्यपापका | त्यपापऽका |
| ९ | २६ | मिशितारम् | मीशितारम् |
| ११ | २२ | मेकाविंशति | मेकाविंशतिं |
| ,, | ,, | एकाविंशति | एकाविंशतिं |
| १३ | १८ | कृच्छ्रं | कृच्छ्रं |
| ,, | २० | तन्दुल | तण्डुल |
| १४ | १० | बध्वा | बद्ध्वा |
| ,, | १९ | ताम्र | ताम्रः |
| १५ | १४ | पृथिवीममि | पृथिवीमभि |
| ,, | १५ | तिष्टन्ति | तिष्ठन्ति |
| ,, | १८ | स्तिष्टन्ति | स्तिष्ठन्ति |
| १६ | १३ | दृष्टः | दृष्टः |
| ,, | १० | उदाहार्यो | उदहार्यो |
| १७ | २० | कृच्छ्र | कृच्छ्र |
| ,, | ,, | तेषां | तेषा |
| ,, | २३ | तन्दुल | तण्डुल |
| १८ | २ | मिः | निः |
| ,, | ,, | मंपडला | मण्डला |
| ,, | १३ | म्यो | भ्यो |
| ,, | १४ | नीलग्रीवायत्ये | नीलग्रीवायेत्य |
| ,, | १८ | दाश्वान्सा०हा | दाश्वान्साह्वा |
| ,, | १९ | तेम्यो | तेभ्यो |
| ,, | २० | कृमृदरुहिम्य | कृमृदरुहिभ्य |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १८ | २० | ऋद्दशोङ्गिगुण | ऋद्दशोऽङ्गि गुणः |
| १९ | ,, | मौर्वी | मौर्वीं |
| ,, | २७ | परित्यज्य | परित्यज |
| २२ | ९ | मीढुष्ट | मीढुष्ट |
| २३ | १२ | त्वदीयाम्या | त्वदीयाम्या |
| ,, | २२ | आरे अस्मत् | आरे अस्मत् |
| ,, | ,, | नीतिं धेहि | नीतिं धेहि |
| २४ | ४ | पदान्तः | पादान्तः |
| ,, | २५ | प्रथमानुवाके | सा०भा० प्रथमानुवाके |
| २७ | २० | नर्म इति | नर्मः इति |
| ,, | २१ | सस्पिञ्जराय | सस्पिञ्जराय |
| ,, | ,, | त्विषीं ऽमतइति | त्विषींमतइति |
| ,, | ,, | त्विषी ऽमते | त्विषि ऽमते |
| ,, | २५ | पथिनां | पथीनां |
| ,, | ३० | संङ्कीर्ण | सङ्कीर्ण |
| २८ | १६ | नर्म | नर्मः |
| ,, | १९ | भभ्रु | बभ्रु |
| ,, | २० | तिष्टतीति | तिष्ठतीति |
| २९ | २ | हरिकेशाय | हरिं ऽकेशाय |
| ,, | ,, | वीतिने | ऽवीतिने |
| ,, | ३ | पुष्टानां | पुष्टानाम् |
| ३० | १४ | सूताया | सूताया |
| ,, | ,, | ऽऽ | ऽ |
| ,, | २० | तदधिष्टाने | तदधिष्ठाने |
| ३१ | ५ | स्छपतये | स्थपतये |
| ३२ | ३ | भुव | भुव |
| ,, | ४ | नमः | नमः |
| ,, | ५ | भुवन्तये | भुवन्तये |
| ,, | २४ | क्रन्दयते | ऽक्रन्दयते |
| ३३ | ३ | समाऽह्वानं | समाह्वानं |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३३ | २३ | तिष्ठतीति | तिष्ठत इति |
| ३४ | १७ | उभयतो नमस्काराणि | उभयतोनमस्काराणि |
| ३६ | १४ | न्त | न्ते |
| ३७ | ३ | वास कारो | वा सकारो |
| ३८ | १६ | ह्भ्यां | ह्भ्यां |
| ,, | ,, | मतुप । | मतुप |
| ३९ | १० | षुमत्ऽ | षुमत्ऽ |
| ,, | ,, | भ्यः धन्वाविभ्यः | भ्यः धन्वाविभ्य |
| ४० | ३ | आय | आय |
| ,, | ,, | विसृज | वि सृज |
| ,, | ५ | त्यायच्छंत् | त्यायच्छंत् |
| ,, | १५ | इतिविध्यंत् | इतिविध्यंत् |
| ,, | १६ | भ्यःच | भ्यः च |
| ४१ | १२ | धावंत्ऽभ्यः | धावंत्ऽभ्यः |
| ४२ | १० | पुरश्वरणो | पुरश्चरणो |
| ४३ | २७ | तृतीयानुवाके | सा० भा० तृतीयानुवाके |
| ,, | २७-२८ | यान्युभयतो नमस्काराणि | यान्युभयतोनमस्काराणि |
| ,, | २८ | चतुर्थे | चतुर्थे |
| ४५ | १२ | व्रातपतिभ्य | व्रातपतिभ्य |
| ४७ | २४ | संग्रहीतृऽभ्य | संग्रहीतृऽभ्यः |
| ४८ | १३ | नर्म | नर्मः |
| ४९ | १२ | मृगयुऽ | मृगयुऽ |
| ५० | २ | अत्र | सा० भा० अत्र |
| ५१ | ११ | चतुर्थे | सा० भा० चतुर्थे |
| ५२ | ८ | कण्ठाय | कण्ठाय |
| ,, | ९ | नीलऽ | नीलऽ |
| ५४ | १५ | अग्रियार्य | अग्रियाय |
| ५५ | ९ | ऊर्म्यार्य | ऊर्म्याय |
| ,, | १८ | द्वीप्याय | द्वीप्याय |
| ५६ | ४ | पञ्चमे | सा० भा० पञ्चमे |
| ,, | १५ | पूर्वऽजाय | पूर्वऽजाय |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ५६ | २५ | ये'त्यपऽ | येत्यंप |
| ५७ | १३ | प्रतिसर्याय | प्रतिऽसर्याय |
| ,, | १४ | सोभ्यः | सोभः |
| ५८ | ४ | खल्याय | खल्याय |
| ५९ | ९ | च | च |
| ६० | २ | सेनाय | सेनाय |
| ६१ | २० | त्याहनन्याय | त्याऽहनन्याय |
| ६३ | ७ | सुऽआयुधाय | सुऽआयुधाय |
| ,, | ,, | धन्वने | धन्वने |
| ६५ | ३ | अवर्ष्याय | अवर्ष्याय |
| ६७ | ६ | सप्तमे | सा० भा० सप्तमे |
| ६८ | ,, | पशुपतये च | पशुऽपतये च |
| ,, | २१ | अग्रेव | अग्रेव |
| ६९ | २७ | मयोभव | मयोभव |
| ७० | ८ | भयमिति | मय इति |
| ७२ | ४ | लाद्याय | लाद्याय |
| ,, | १० | धित्वा | न्धित्वा |
| ७३* | ३ | तात्पर्याथः | तात्पर्यार्थः |
| ,, | ४ | प्रवाह | प्रवाहे |
| ,, | ८ | अष्टमे | सा० भा० अष्टमे |
| ७४ | १५ | गोऽस्थाय | गोऽस्थ्याय |
| ,, | १७ | गोष्टयाय | गोष्ठयाय |
| ७६ | ४ | बल्वजातृ | बल्वजास्तृ |
| ,, | १० | ऊर्व्या | उर्व्या |
| ,, | १६ | शद्याय | शद्याय |
| ,, | २३ | त्यपगुर | त्यपऽगुर |
| ७७ | ,, | उत्तरीयादयो | उत्तरीयादयः |
| ,, | २४ | सर्पिःपात्रं | सर्पिष्पात्रं |
| ७८ | १८ | तांश्छत | ताञ्छत |

* "यः पुरुषः" इत्यारभ्य "तात्पर्यार्थः" इत्येतदन्तं भाष्यं सायणाचार्यप्रणीताष्टमानुवाकभाष्यस्यान्ते ज्ञेयम् ।

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ७९ | ३२ | त्रिसहस्रा | त्रीसहस्रा |
| ८४ | २४ | एवमा | एवं मा |
| ८६ | २ | तन्वा | तन्वाः |
| ,, | १६ | स्याजीवेम | स्याजीवेम |
| ८८ | १० | इति | इति |
| ८९ | १२ | संख्या सुपूर्व | संख्यासुपूर्व |
| ९० | २२ | बव्हृचास्तु | बह्वृचास्तु |
| ,, | २४ | अश्रुवीमहि | अश्रुवीमहि |
| ,, | २५ | च्छन्दसीति | छन्दसीति |
| ९२ | १७ | समावृत्तम् | समावृतम् |
| ९३ | २४ | घृत्ताक्तै | घृताक्ते |
| ,, | २५ | मुपोष्प | मुपोष्य |
| ९५ | १४ | चाप्प | चाप्य |
| ,, | १५ | क्रूरं | क्रूरं |
| ९६ | १७ | मृडा | मृड |
| ,, | २१ | नित्य तरुणम् | नित्यतरुणम् |
| ,, | २२ | द्दष्टान्तः | दृष्टान्तः |
| ९७ | १० | नशाब्दः | नशब्दः |
| ,, | १७ | विभेक्त | विभक्ते |
| ,, | १८ | वहुल | वहुल |
| ९८ | ४ | दुर्मतिरिति | दुर्मतिरिति |
| ,, | ५ | इति | इति |
| ९९ | ९ | वचस्य | वचनस्य |
| ,, | ,, | इमं द्रास्विति | ईमन्द्रास्विति |
| ,, | १९ | प्रारम्भः | प्रारम्भः |
| ,, | २८ | किञ्चिदपि | किञ्चिदपि |
| १०० | ३ | चत्वारिंशदेक | चत्वारिंशतमेक |
| ,, | ९ | दशमीभृच | दशमीभृच |
| १०१ | २१ | हेतयः | हेतयः |
| १०२ | ३२ | सर्वान्जेतु | सर्वाञ्जेतु |
| १०३ | १३ | भगऽवः | भगऽवः |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ,, | पराचीना | पराचीना |
| ,, | २५ २६-२८ | बाव्हो | बाह्वो |
| १०४ | ४ | मीशानः | मीशानः |
| ,, | १० | सर्पिः सिक्ता | सर्पिस्सिक्ता |
| ,, | २५ | दशमे | सा०भा०दशमे |
| १०५ | ६ | शैलादादयो | शैलादयो |
| १०६ | ५ | धन्वन | धन्वान |
| ११० | २९ | योजनेव | योजनेऽव |
| १११ | २५ | यः | यः |
| ११३ | १९ | म्यो | भ्यो |
| ,, | २७ | मघर्मषण | मघमर्षण |
| ११४ | ३ | प्रद्यते | त्पद्यते |
| ,, | १५ | एतर्हि | एतर्हि |
| ,, | १६ | स्तनं | स्तनं |
| ,, | ,, | एतर्हि | एतर्हि |
| ,, | १७ | प्रेप्सति | प्रेप्सति |
| ,, | २१ | चितः | चितः |
| ,, | २२ | भागधेयमितिभागऽधेयम् | भागधेयमितिभागऽधेयम् |
| ११४ | २२ | प्रेप्सतीतिप्रऽईप्सति | प्रेति ईप्सति |
| ,, | २६ | यजमानः | यजमानः |
| ११५ | १३ | जुहुयाद्ग्राम्यान्पशूञ्छु | जुहुयाद्ग्राम्यान्पशूञ्छु |
| ,, | १८ | वा गवीधुक् | वा जुहुयात् गवीधुक |
| ,, | २५ | ण्यानिति | ण्यान् इति |
| ११६ | १३ | प्रासिञ्चन् | प्रासिञ्चन् |
| ,, | १४ | ३ | १ |
| ,, | १५ | त्वायेति | त्वायं इति |
| ११७ | ८ | इति | इति |
| ११८ | २ | त्यथयेति | त्यथेयंति |
| ,, | १४ | परिक्रामं | परिक्रामं |
| ,, | ‘‘ | होतव्य | होतव्यं |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ११८ | १६ | अनुपरिक्राम | अनुपरिक्राम |
| ,, | ,, | परिऽक्रामंम् | ऽपरिक्रामंम् |
| ,, | १९ | परिऽक्रामंम् | ऽपरिक्रामंम् |
| ११९ | २० | न्यस्ये | न्यस्ये |
| ,, | २९ | मार्छतीति | मार्च्छति इति |
| १२० | १२ | न | न |
| १२२ | २ | ध्रुवं | ध्रुवं |
| ,, | २७ | वैकङ्ककतो | वैकङ्कतो |
| १२४ | ८ | तनू- | तनूः |
| १२५ | १६ | ' नमस्ते ' | नमस्ते |
| १२६ | ७ | प्रसवश्च-'मे | प्रसवश्चमे ' |
| १२७ | ५ | धीतिः | धीतिः |
| १२८ | ९ | वृद्धिश्च | वृद्धिश्च |
| १२८ | १३ | सुपथं च म | सुपथं च म |
| ,, | १४ | सुमति | सुमति |
| १२९ | २ | पथंम् | पथंम् |
| ,, | ४ | रिति | रिति |
| ,, | १५ | तज्ज्न्यो | तज्जन्यो |
| ,, | २७ | श्च | च |
| १३० | ३ | मे भयं | मेऽभयं |
| ,, | ४ | सुदिनं | सुदिनं |
| ,, | १७ | आयुष्मिकः | आमुष्मिकः |
| १३१ | ११ | वृष्टिश्च | वृष्टिश्च |
| ,, | २१ | पुष्टम् | पुष्टम् |
| १३२ | ६ | पयः प्रभृ | पयःप्रभृ |
| ,, | २५ | आरण्याश्च यज्ञेनं कल्पन्तां वित्तंच मे | आरण्याश्च यज्ञेनं कल्पन्तां वित्तं च मे |
| १३३ | ७ | त्रपुः | त्रपु |
| ,, | १० | कल्पताम् | कल्पन्ताम् |
| ,, | २४ | च | चं |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ,, | ,, | पराचीना | पराचीना |
| ,, | २५ २६-२८ | बाव्हो | बाह्वो |
| १०४ | ४ | मीशानः | मीशानः |
| ,, | १० | सर्पिः सिक्ता | सर्पिस्सिक्ता |
| ,, | २५ | दशमे | सा०भा०दशमे |
| १०५ | ६ | शैलादादयो | शैलादयो |
| १०६ | ५ | धन्वन | धन्वान |
| ११० | २९ | योजनेव | योजनेऽव |
| १११ | २५ | यः | यः |
| ११३ | १९ | भ्यो | भ्यो |
| ,, | २७ | मघमर्षण | मघमर्षण |
| ११४ | ३ | प्रद्यते | त्पद्यते |
| ,, | १५ | एतर्हि | एतर्हि |
| ,, | १६ | स्तनं | स्तनं |
| ,, | ,, | एतर्हि | एतर्हि |
| ,, | १७ | प्रेप्सति | प्रेप्सति |
| ,, | २१ | चितः | चितः |
| ,, | २२ | भागधेयमितिभागऽधेयम् | भागधेयमितिभागऽधेयम् |
| ११४ | २२ | प्रेप्सतीतिप्रऽईप्सति | प्रेति ईप्सति |
| ,, | २६ | यजमानः | यजमानः |
| ११५ | १३ | जुहुयाद्ग्राम्यान्पशून्छु | जुहुयाद्ग्राम्यान्पशून्छु |
| ,, | १८ | वा गवीधुक | वा जुहुयात् गवीधुक |
| ,, | २५ | ण्यानिति | ण्यान् इति |
| ११६ | १३ | प्रासिञ्चन् | प्रासिञ्चन् |
| ,, | १४ | ३ | १ |
| ,, | १५ | त्वायेति | त्वायं इति |
| ११७ | ८ | इति | इति |
| ११८ | २ | त्यथेयेति | त्यथेयंति |
| ,, | १४ | परिक्राम | परिक्रामं |
| ,, | ,, | होतव्य | होतव्यं |

| पृष्ठम् । | पङ्क्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ११८ | १६ | अनुपरिक्राम | अनुपरिक्राम |
| ,, | ,, | परिऽक्रामम् | ऽपरिक्रामम् |
| ,, | १९ | परिऽक्रामम् | ऽपरिक्रामम् |
| ११९ | २० | न्यस्ये | न्यस्ये |
| ,, | २९ | मार्छतीति | मार्च्छति इति |
| १२० | १३ | न | न |
| १२२ | २ | त्ध्रुवं | द्ध्रुवं |
| ,, | २७ | वैकङ्ककतो | वैकङ्कतो |
| १२४ | ८ | तनू- | तनूः |
| १२५ | १६ | ' नमस्ते ' | नमस्ते |
| १२६ | ७ | प्रसवश्च-'मे | प्रसवश्चमे ' |
| १२७ | ५ | धीतिः | धीतिः |
| १२८ | ९ | वृद्धिश्च | वृद्धिश्च |
| १२८ | १३ | सुपथं च म | सुपथं च म |
| ,, | १४ | सुमति | सुमति |
| १२९ | २ | पथंम् | पथंम् |
| ,, | ४ | रिति | रिति |
| ,, | १५ | तज्जन्यो | तज्जन्यो |
| ,, | २७ | श्च | च |
| १३० | ३ | मे भयं | मेऽभयं |
| ,, | ४ | सुदिनं | सुदिनं |
| ,, | १७ | आयुष्मिकः | आमुष्मिकः |
| १३१ | ११ | वृष्टिश्च | वृष्टिश्च |
| ,, | २१ | पुष्ठम् | पुष्टम् |
| १३२ | ६ | पयः प्रभृ | पयःप्रभृ |
| ,, | २५ | आरण्याश्च यज्ञेनं कल्पन्तां वित्तंच मे | आरण्याश्च यज्ञेनं कल्पन्तां वित्तं चं मे |
| १३३ | ७ | त्रपुः | त्रपु |
| ,, | १० | कल्पताम् | कल्पन्ताम् |
| ,, | २४ | च | चं |

| पृष्ठम्। | पङ्क्तिः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १३४ | २० | अम्रया | अग्र्या |
| ,, | ,, | सर्वेः | सर्वैः |
| १३५ | ३ | षष्ठोनुऽवाकः | षष्ठोऽनुवाकः |
| ,, | ४ | सप्तमामाह | सप्तमीमाह |
| १३६ | २५ | गृण्हामीति | गृह्णामीति |
| १३८ | २ | कल्पताम् | कल्पन्ताम् |
| ,, | ६ | वन्हिः | वह्निः |
| ,, | ,, | प्रवर्ग्यः | प्रवर्ग्यः |
| ,, | १० | शद्धात् | शब्दात् |
| ,, | १४ | बृद्रथ | बृहद्रथ |
| १३९ | ५ | अविः | अविः |
| ,, | १२ | प्रऽअनः | प्रऽअनः |
| १४० | ३ | नुष्टीय | नुष्ठीय |
| १४१ | १८ | अधिष्टाय | अधिष्ठाय |
| ,, | १९ | श्वैत्रादि | श्वैत्रादि |
| ,, | २४ | मुष्मिं | मुष्मिँ |
| १४२ | १ | [न० ए० अ०] | [दे० अ० अ०] |
| ,, | ४ | पिन्वमाना | पिन्वमाना |
| ,, | २२ | विच्छिंनत्ति | विच्छिंनत्ति |
| १४३ | १ | [म० ए० अ०! | [दे० अ० अ०] |
| १४४ | १ | [च० ए० अ०] | [दे० अ० अ०] |
| ,, | ८ | मर्वरुध | मर्वरुन्ध |
| ,, | २१ | वंरून्धे | वंरुन्धे |
| १४५ | १ | [च० ए० अ०] | [दे० अ० अ०] |
| ,, | ९ | भूयिष्ट | भूयिष्ठ |
| १४५ | ९ | भूयिष्टभाक् | भूयिष्ठभाक् |
| ,, | १३ | वंरू | वंरु |
| ,, | १४ | रून्ध | रुन्ध |
| ,, | १६ | इति | इति |
| ,, | २३ | कृत्या इति | कृत्यै इति |
| १४६ | १ | [च० ए० अ०] | [दे० अ० अ०] |

| पृष्ठम्। | पङ्क्तिः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १४६ | ६ | वर्च | वर्च |
| ,, | ७ | रून्ध | रुन्ध |
| ,, | १० | रुन्धे | रुन्धे |
| ,, | १४ | रून्ध | रुन्ध |
| १४७ | १ | [च० ए० अ०] | [दे० अ० अ०] |
| ,, | ४ | क्रृत्यां | क्रुत्यै |
| ,, | ६ | क्रुत्सं | क्रुत्सं |
| ,, | ९ | नत्वाय | नत्वार्य |
| ,, | १० | युज | युजे |
| ,, | १५ | राधिक्यं | राधिक्यं |
| ,, | १६ | भिक्रान्त्या | भिक्रान्त्यै |
| ,, | २० | मष्टत्वम् | मष्टत्वम् |
| १४८ | १ | [च० ए० अ०] | [दे० अ० अ०] |
| ,, | ७ | अवेति | अवेतिं |
| ,, | १५ | शादिति | शादिति |
| ,, | १६ | एति | एतिं |

